चतुर्थाऽधमकोटिः शब्दचित्रम्। चित्रमीमांसाकारेणाप्यर्थचित्रस्य शब्दचित्राऽपेक्षया श्रेष्ठत्वमभिहितं यथा—'शब्दचित्रस्य प्रायो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीयमतीवोपलभ्यत इति शब्दचित्रांशमपहायार्थचित्रमीमांसा प्रसन्नविस्तीर्णा प्रस्तूयते।' (चि० मी० १)

ध्वनिकाव्यस्य तुलनायामर्थचित्रस्य चापेक्षया शब्दचित्रस्यावरत्वमपरिहार्यं भवतु नाम, किन्तु तत्रापि चमत्कारविशेषस्य सद्भावोऽवगणनां नार्हति। ध्वनिकारानन्दवर्धनाचार्येणापि स्वीयदेवीशतके प्रभूतचित्रबन्धविन्यासः कृत इति विख्यातमेव। वर्णसाम्ये शब्दसाम्ये च संस्कृतमानवस्य स्वाभाविकी रुचिर्नोच्छेदनीया। शब्दचित्रस्याधमकोटिस्वीकरणेऽपि तत्राभिरुचिरद्यापि नो निराकृता। वर्णावृत्तित आकृतिकल्पना श्रव्यस्य दृश्ये परिणतिरेव। आकृत्यात्मकचित्रबन्धानां (खड्गचक्रादीनां) मूला प्रवृत्तिः श्रव्यस्य दृश्ये न्यासरूपैव वर्तते। श्रव्यस्य दृश्येऽभिव्यक्तेश्चूडान्तनिदर्शनमस्माकं संगीते राग-ध्यानपरम्परायां विद्यते। श्रव्यरागस्य दृश्यरूपध्यानं विवृतमस्माकं संगीतशास्त्रे। वेदपाठस्य ध्वज-जटा-माला-रथ-इत्याद्यष्ट-भेदेष्वाकृतिसूचकानि कतिपयनामाति सन्ति। अत्रापि श्रव्यवर्णविन्यासस्य क्रमभेदस्य दृश्यकल्पनैवोपजीव्या। तद्वत् सङ्गीतस्य स्वरसन्दर्भरूपिष्वलङ्कारेषु कतिपयनामान्याकृतिसूचकानि विद्यन्ते। यथा—वेणी-ऊर्मि-श्येन-आवर्त-आदीनि। संगीतप्रबन्धानां नामस्वपि चक्रवाल-क्रौञ्चपद-स्वस्तिक (रागकदम्बप्रबन्धभेदः)—इतीदृगाकृतिसूचकसंज्ञा उपलभ्यन्ते। तद्वदेवच्छन्छसामपि दृश्यसूचकनामानि प्राप्यन्ते यथा—कमल-काञ्ची-किरीट-क्रौञ्चपद-चक्र-चक्रपद-इत्यादीनि।

श्रव्ये दृश्यकल्पनायाः स्वल्पविवृत्यनन्तरं विविधकलासु चित्रकाव्यस्य सदृक्प्रवृत्तेर्यत्किञ्चिद्विवरणं क्रमप्राप्तमेव। चित्रकलायां (आलेख्ये) एकस्यामाकृत्यां गूढभावेनान्याकृतिनिवेशनं क्रियते। यथा—मेघपङ्क्तेश्चित्रे गजपङ्क्तेर्गूढचित्रणम्। तद्वन्मूर्तिकलायामप्येकस्यां मूर्त्यामेकाधिकाकृतीनां गूढसन्निवेश उपलभ्यते। उत्कलप्रदेशे भुवनेश्वरनगर्यां प्रख्यातकेदारगौरीमन्दिरस्य प्राङ्गणस्थ एकस्मिँल्लघुमन्दिरे प्राच्यां जटितैका मूतिर्मया दृष्टा यस्यामेकः शयानः पुरुषो भङ्गिविशेषेण दर्शनाद् वामदिशि न्यस्तशिरा दृश्यतेऽपरभङ्ग्या दर्शनेन च दक्षिणदिशि न्यस्तशिराः प्रतीयते, पुनरप्यपरभङ्ग्या निरीक्षणेन पुरुषद्वयं प्रतिभाति। तद्वत् वास्तुकलायां कोणार्काख्यसूर्यमन्दिरस्य रथाकृतिः प्रसिद्धैव। गीतप्रबन्धेष्वपि तत्सदृशी प्रवृत्तिः कतिपयप्रबन्धभेदानां जनयित्रीति ज्ञायते तज्ज्ञैः। उदाहरणार्थं—स्वरार्थप्रबन्धे स्वरसंज्ञानां संकेताक्षराणां स-रि-ग-म-पधनीनां तत्तन्नादात्मकस्वरूपसंश्लेषेणार्थकल्पना क्रियते। यथा—'गागरी सिर पर धरी'; 'सगरे गाम में, धाम धाम में'। कैवाडप्रबन्धे पाटाक्षरैः (वाद्यजनितध्वनिसूचकाक्षरैः) सार्थका निरर्थका च गीतरचना क्रियते, इयमेवाधुना 'त्रिवट'—इति नाम्ना ख्याता।

अत्रोपसंहारे वैदिकपरम्परायां यज्ञकर्मणि 'श्येनचिद्' इति संज्ञया ख्यातस्य क्रियाविशेषस्य स्मरणं प्रासङ्गिकम्। तत्र श्येनाकृतेर्निष्पत्त्यै विविधेष्टकानां चयनं भङ्गिविशेषेण क्रियते। तद्वत 'कङ्कचिद्' इति चयनयागसंज्ञाऽपि विद्यते।

आगमपरम्परागतायामुपासन-पद्धत्यां मन्त्रो ज्ञानात्मकः, तन्त्रं क्रियात्मकम्, यन्त्रञ्च भावनात्मकम्। यन्त्रमाकृतिमूलकमेव, तत्रापि चित्रबन्धानां मूलं भारतीयोपासनया सह संबद्धमिति प्रतीयते।

## ३. संस्कृतसाहित्ये लक्षण-लक्ष्य-ग्रन्थेषु चित्रबन्धकाव्यस्येतिहासः

### (क) लक्षणग्रन्थाः

**१. भरतमुनेर्नाट्यशास्त्रम्**—नाट्यशास्त्रे 'यमकम्' इत्येक एव शब्दालङ्कारः प्रतिपादितः। यथा—

**शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम्॥** (ना०शा० १६, ५९)

अत्राभिनवभारती यथा—

''एवमर्थविषयलक्षणप्रसङ्गेनार्थालङ्कारान् प्रदर्श्य शब्दालङ्कारस्वरूपमाह ……। तुरर्थालंकारेभ्यो व्यतिरेकमाह। शब्दशब्देन वर्णः, पदं, तदेकदेश इति सर्वं गृह्यते। तेनानुप्रासः, लाटीयादेरनेनैवोपसंग्रहः। यमौ द्वौ समजातावुच्येते तत्प्रकृतित्वाद्यमकम्। तेनैकस्याक्षरस्य पदस्य वा द्वितीयं सदृशं निरन्तरं सान्तरं वा शोभाजनकमलङ्कारः। यथा मुक्ताफलस्योचित-मुक्ताफलान्तर-पद्मरागादेर्वोपाश्रयविशेषः समुचितसहासीन-सत्पुरुषमध्यपतनं वा सत्पुरुषान्तरस्य।''

सुस्पष्टविवृतिरियं विवरणान्तरं नापेक्षते। यमकस्य भरतोक्ता दश भेदाः सलक्षणा यथा—

(१) **पादान्तयमकम्**—चतुर्णां यत्र पादानामन्ते स्यात् सममक्षरम्।

(२) **काञ्चीयमकम्**—पादस्यादौ तथान्ते च यत्र स्यातां पदे समे।

(३) **समुद्रयमकम्**—अर्धेनैकेन यद् वृत्तं सर्वमेव समाप्यते।

(४) **विक्रान्तयमकम्**—एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ यदा॥

(५) **चक्रवालयमकम्**—पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः॥

(६) **सन्दष्टयमकम्**—आदौ द्वे यत्र पादे तु भवेतामक्षरे समे॥

(७) **पादादियमकम्**—आदौ पादे तु यत्र स्यात् समावेशः समाक्षरः।

(८) **आम्रेडितयमकम्**—पादस्यान्त्यं पदं यत्र द्विर्द्विरेकमिहोच्यते॥

(९) **चतुर्व्यवसितयमकम्**—सर्वे पादाः समा यत्र भवन्ति नियताक्षराः॥

(१०) **मालायमकम्**—नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत्॥ (ना०शा० १६. ५९-८६)

वर्णावृत्तिः पदैकदेशावृत्तिः पदावृत्तिरिति त्रिविधाऽऽवृत्तिरेव शब्दालङ्काराणां मूलरूपा। यमकस्यैव शिथिल-गाढ-बन्धैश्चित्रबन्धाः सम्भवन्ति। भरतोक्तयमकभेदेष्वपि चक्रवालकाञ्ची-मालेतिसंज्ञा आकृतिसूचकाः। चक्रवालयमकमेव चक्रबन्धस्य रूपे न्यस्तं परवर्तिकाले।

२. **अग्निपुराणम्**—अत्र यमकस्य षोडशभेदाः, चित्रबन्धानां चाष्टौ भेदा उक्ता यथा—गोमूत्रिका, अर्धभ्रमणम्, सर्वतोभद्रम्, अम्बुजम्, चक्रम्, चक्राब्जम्, दण्डः, मुरजश्चेति।

३. **भामहस्य काव्यालङ्कारः**—अस्मिन् ग्रन्थे यमकस्य पञ्चप्रकारा आदि-मध्यान्त-पादाभ्यास-आवली-समस्तपाद-इतिविशेषणयुक्ता एव स्वीकृताः। भरतोक्ता अन्य भेदा एष्वेवान्तर्भुक्ता इति प्रतिपादितम् (२. ९-१८)। प्रहेलिकाया लक्षणमुक्त्वा तस्य व्याख्या-गम्यत्वञ्च द्योतयित्वा तदुदाहरणं नोक्तवान् भामहः।

४. **दण्डिनः काव्यादर्शः**—यमकभेदाः सविस्तरमुक्ताः। कतिपयचित्रबन्धा अपि लक्षणोदाहरणसहिताः प्रतिपादिताः। यथा—गोमूत्रिका, अर्धभ्रमकम् सर्वतोभद्रम्। प्रहेलिकायाः साङ्गोपाङ्गनिरूपणमुपलभ्यतेऽस्मिन् ग्रन्थे।

५. **वामनस्य काव्यालङ्कारसूत्रवृत्तिः**—अत्र यमकस्यानेकभेदा उक्ताः। शृङ्खला-परिवर्तक-चूर्ण-इति-भङ्गविशेषा यमकस्योपकारकत्वेनोपन्यस्ताः।

६. **रुद्रटस्य काव्यालङ्कारः**—यमकश्लेषनिरूपणानन्तरं चित्रबन्धप्रतिपादनं स्वतन्त्रेऽध्याये (पञ्चमे) कृतम्। तत्र चित्रबन्धस्य लक्षणं यथा—

**भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि।**
**साङ्कानि विचित्राणि च रच्यन्ते यत्र तच्चित्रम्॥ (५.१)**

तत्रोदाहृता बन्धा यथा—खड्ग-मुसल-धनुः-शर-शूल-शक्ति-हल-रथपद-तुरगपद-गजपद-प्रतिलोमानुलोम-अर्धभ्रम-मुरज-सर्वतोभद्र-पद्म-अनुलोम-विलोमविपर्यस्ताक्षरपाठाः। अष्टबन्धस्थपद्यानां महाचक्र एकत्र विन्यासो रुद्रटस्यापूर्व-कौशलव्यञ्चकः। अस्माकं चित्रकविरामरूपैरपि महाचक्रो निबद्धः।

७. **भोजराजस्य सरस्वतीकण्ठाभरणम्**—समस्तलक्षणग्रन्थानां मौलिरत्नभूतोऽयं ग्रन्थश्चित्रबन्धनिरूपणप्रसङ्गे। तत्र चित्रप्रकरणे वर्ण-स्थान-स्वर-आकार-गति-बन्ध-इतिषट्-प्रकारेण विशिष्टस्य चित्रकाव्यस्य साङ्गोपाङ्गानि लक्षणोदाहरणानि सन्ति। आकृतिमूलकेषु बन्धेषु बहुविधः पद्मबन्धः, चक्र-द्विशृङ्गाटक-शरयन्त्र-व्योम-मुरज-एकाक्षरमुरज-मुरजप्रस्तार-गोमूत्रिकादयो विशेषोल्लेखनीयाः।

८. **मम्मटस्य काव्यप्रकाशः**—यमकस्य 'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः' (९.११७)—इति लक्षणमुक्त्वा मम्मटाचार्यः 'तदेतत्काव्यान्तर्गड्डुभूतमिति नास्य भेदलक्षणं कृतम्' इति गदित्वा यमकभेदानां साङ्गनिरूपणान्निवृत्तः। तत्र चित्रबन्धस्य लक्षणं यथा—

**तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता॥** (९.१२१)

खड्ग-मुरज-पद्म-सर्वतोभद्र-इति-चत्वारो भेदा उदाहृताः।

९. **हेमचन्द्रस्य काव्यानुशासनम्**—''स्वर-व्यञ्जन-स्थान-गति-आकार-नियम-च्युत-गढादि-चित्रम्''—इति लक्षणं दत्वा प्रतिभेदमुदाहरणानि न्यस्तवान् हेमचन्द्रः। आकारबन्धे नास्ति विशेषः कोऽपि।

१०. **राजानकरुय्यकस्य अलङ्कारसर्वस्वम्**—''वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम्।'' (पृ० ३०) ''पौनरुक्त्यप्रस्तावे स्थानविशेषश्लिष्ट-पौनरुक्त्यात्मकं चित्रवचनम्। यद्यपि लिप्यक्षराणां खड्गादिसन्निवेशविशिष्टत्वं तथापि श्रोत्राकाशसमवेत-वर्णात्मशब्दाभेदेन तेषां लोक प्रतीतेर्वाचकशब्दालङ्कारोऽयम्।'' (तत्रैव)। तत्र जयरथस्य टीका यथा—''लिप्यक्षराणां श्रूयमाणता सतत्त्ववर्णशब्दाभेदप्रतिपत्त्या औपचारिकोऽयं शब्दालङ्कार इति तात्पर्यार्थः।''

११. **कविकर्णपूरस्य अलङ्कारकौस्तुभः**—

**चित्रं नीरसमेवाहुर्भगवद्विषयं यदि।** (७.२१४)
**तदा किञ्चिच्च रसवद्यथेक्षोः पर्वचर्वणम्॥**

इतिश्लोके चित्रस्य पृथङ्निर्देशं कृत्वा कतिपयबन्धानुदाहृतवान् कविकर्णपूरो यथा—प्रतिलोमानुलोमपाद-प्रतिलोमानुलोमश्लोक-सर्वतोभद्रच्छत्र-खड्ग-मुरज-पताका-गदा-पद्म-चक्र-शार्ङ्ग-बन्धाः।

१२. **विश्वनाथस्य साहित्यदर्पणः**—

**पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते॥** (१०.१५)

''आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः। अस्य च तथाविधश्रोत्राकाशसमवाय-विशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कार-विधायिवर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम्। .......... (अष्टदलपद्मबन्धस्योदाहरणानन्तरम्)—काव्यान्तर्गड्डुभूततया तु नेह प्रपञ्चयते।''

उद्भटेन तु काव्यालङ्कारसारसंग्रहेऽनुप्रासलाटानुप्रासादि-व्यतिरिक्तः कोऽपि शब्दालङ्कारो न निरूपित इति तस्य संग्रहो न कृतोऽत्र।

चित्रकाव्य-प्रतिपादक-प्रकीर्णलक्षणग्रन्थेषु धर्मदाससूरेर्विदग्धमुखमण्डनम् इति ग्रन्थः स्मरणीयोऽत्र। तथैवाधुनिकयुगे दामोदरमिश्रशास्त्रिप्रणीतं चित्रबन्धकाव्यमपि लक्षणोदाहरण-ग्रन्थरूपेणोल्लेखनीयम्।

उपसंहारे पाणिनीयाष्टाध्यायीत उद्धरणमेकमप्रासङ्गिकं न भवेत्। संज्ञायाम् (३।४।४२) 'बन्धे च विभाषा' (६।३।१३) इति सूत्रद्वयस्य व्याख्याने काशिकायां क्रौञ्च-मयूरिका-अट्टालिका-हस्त-चक्र-इति-बन्धभेदा उल्लिखिताः। तेनावधारयितुं शक्यते यत् पाणिनिमुनेः कालेऽपि काव्ये चित्रबन्धानां प्रचलनमासीत्।

## (ख) लक्ष्यग्रन्थाः

वैदिकवाङ्मये शब्दचमत्कारस्य कूटत्वस्य च बीजरूपेण सद्भावोऽविरलरूपेणोपलभ्यते। कूट-प्रकारविशेष-प्रहेलिकाया उदाहरणरूपि-निम्नोद्धृतमन्त्रा विद्यन्ते।

**कः स्विदेकाकी चरति क उ स्विज्जायते पुनः।**
**कि ᳪ स्विद्धिमस्य भेषजङ्किंवा वपनं महत्॥ ४५॥**

सूर्य एकाकी चरति चन्द्रमा जायते पुनः।
अग्निर्हिमस्य भेषजं भूमि वा वपनं महत्॥ ४६॥
कि ৺ स्वित् सूर्यसमञ्ज्योतिः कि ৺ समुद्रसमं सरः।
किं स्वित् पृथिव्यै वर्षीयः कस्य मात्रा न विद्यते॥ ४७॥
ब्रह्म सूर्यसमञ्ज्योतिर्द्यौः समुद्रसम ৺ सरः।
इन्द्रः पृथिव्यै वर्षीयान्गोस्तु मात्रा न विद्यते॥ ४८॥

० ० ० ०

केष्वन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितानि।
एतद् ब्रह्मन्नुपबल्हामसि त्वा कि ৺ स्विन्नः प्रतिवाचा स्यात्॥ ५१॥
पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुषे अर्पितानि।
एतत्त्वात्र प्रतिमन्वानो अस्मिन् मायया भवस्युत्तरो मत्॥ ५२॥
का स्विदासीत् पूर्वचित्तिः कि ৺ स्विदासीद् बृहद् द्वयः।
का स्विदासीत् पिलिप्पिला का स्विदासीत् पशंगिला॥ ५३॥
द्यौरासीत् पूर्वचित्तिरश्व आसीद् बृहद् द्वयः।
अविरासीत् पलिप्पिला रात्रिरासीत् पशंगिला॥ ५४॥

(वाजसनेयिसंहिता २३।४५-४८, ५१-५४)

तद्वत्—
द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो‌ऽभिचाकशीति॥ (मुण्ड० ३।१।१)

इति मन्त्रेऽपि कूटत्वं स्पष्टमेव। अनुप्रासस्योदाहरणमपि दुर्लभं नास्ति। यथा—

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु॥ (ऋ० सं० १०/१०६/६)
ह ৺ सः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥ (कठो० २.२.२.)

'नमकाध्याय'—'चमकाध्याय'—(शुक्लयजुर्वेदसंहितायां यथाक्रमं-१६-१८ संख्यकौ) इति संज्ञाद्वयमप्यनुप्रासबोधकम्।

'वरुणस्योत्तम्भनमसि' (शुक्लयजुर्वेदसं० अ० ४/४०) इति मन्त्रस्य पद्मबन्धरूपे न्यासः सम्भवः।

आदिकविवाल्मीकिप्रणीते लौकिकवाङ्मयस्यादिमप्रबन्धे यमकानुप्रासयोर्बहुलप्रयोगो दृश्यते। तत्र सुन्दरकाण्डस्य पञ्चमसर्गे सर्वे श्लोकाः (सप्तविंशतिसंख्यकाः) प्रतिचरणमन्त्यानुप्रासयुक्ताः। तेन सर्वेषामेव पद्मबन्धे न्यासो निष्पद्यते। तत्र प्रथमश्लोकद्वयं यथा—

ततः स मध्यङ्गतमंशुमन्तं, ज्योत्स्नावितानं मुहुरुद्वहन्तम्।
ददर्श धीमान् दिवि भानुमन्तं, गोष्ठे वृषं मत्तमिव भ्रमन्तम्॥
लोकस्य पापानि विनाशयन्तं, महोदधिंञ्चापि समेधयन्तम्।
भूतानि सर्वाणि विराजयन्तं, ददर्श शीतांशुमथाभियान्तम्॥

कविकुलगुरुकालिदासै रघुवंशमहाकाव्ये यमकस्य भेदाः प्रस्तुताः। महाकाव्ये चित्रबन्धात्मकस्य सर्गविशेषस्य प्रयोक्ता सर्वप्रथमः कविर्भारविरेव वर्तते। तेन किरातार्जुनीयस्य पञ्चदशसर्गे गोमूत्रिकाबन्धः (द्वादशपद्येषु) सर्वतोभद्रं (पञ्चविंशति-पद्येषु) अर्धभ्रमकं (सप्तविंशतिपद्येषु) इति चित्रकाव्यभेदाः सन्निविष्टाः।

भट्टिकवे रावणवधकाव्ये निम्नोद्धताश्चित्रभेदा विशेषेणोपलभ्यन्ते।

१. एकान्तराख्यातम् (एकपदान्तरेणाख्यातनिवेशः)।

२. आख्यातमाला (एकस्मिन्नैव लकार आख्यातानां प्रयोगः—''भ्रेमुर्ववल्गुर्ननृतुर्जजक्षु'रित्यादि)

३. आद्यन्तयमकम्।

४. संस्कृतप्राकृतस्य सङ्कीर्णप्रयोगा भाषावैचित्र्यबोधकाः। (भट्टिकाव्यस्य प्रसन्न-काण्डे भाषासमावेशाख्ये चतुर्थपरिच्छेद एतादृग्भाषायमकप्रयोगा बाहुल्येन विद्यन्ते, परिच्छेदोऽयं गणनाभेदेन सेतुबन्धनाख्यत्रयोदशसर्गरूपेऽपि प्रत्यभिज्ञातः)।

महाकविमाघेन शिशुपालवधस्यैकोनविंशसर्गे निम्नोद्धृतचित्रप्रकारा निबद्धाः। तत्र कतिपयनवीनाश्चित्रबन्धा अपि सन्ति। १-**एकान्तरपादः**, २-**एकाक्षरबन्धः** ३-**द्व्यक्षरबन्धः** ४-सर्वतोभद्रम् ५-मुरजबन्धः ६-**प्रतिलोमानुलोमबन्धः** ७-गोमूत्रिकाबन्धः ८-**असंयोगवर्णबन्धः** ९-अर्धभ्रमकम् १०-**गतप्रत्यागतम्** ११-**गूढचतुर्थबन्धः** (यत्राद्यपादत्रयादेव चतुर्थपादो निष्पद्यते) १२-**अतालव्यबन्धः** १३-**अर्थत्रयवाचिबन्धः** १४-चक्रबन्धः।

राजानकरत्नाकरस्य **हरविजयमहाकाव्ये** विंशतिसर्गेषु युद्धवर्णनं निबद्धम् (३१-५० तमसर्गेषु), तत्र **अष्टचत्वारिंशत्संख्यकः** सर्गश्चित्रात्मकः। शिवस्वामिनः **कप्फिणाभ्युदय**-महाकाव्ये ६-१८ संख्यकसर्गाः प्रायेण चित्रात्मकाः। मङ्खकस्य **श्रीकण्ठ**चरितेऽपि श्लिष्टप्रयोगा बाहुल्येन दृश्यन्ते।

उपर्युदाहृतमहाकाव्येषु युद्धवर्णनप्रसङ्ग एव प्रायशश्चित्रबन्धाः प्रयुक्ताः। युद्धे सैनिकानां विविधसन्निवेशैर्व्यञ्जिता आकृतयस्तत्र वर्णनप्रसङ्गे चित्रबन्धकल्पनामुद्बोधयन्तीति कथयन्ति केचित्।

महाकाव्येषु वृत्तविशेषवर्णनस्य (विशेषेण युद्धवर्णनस्य) प्रसङ्गे सर्गविशेषे चित्रबन्धानां सन्निवेशः संस्कृतसाहित्ये प्रायशः सर्वत्र दृश्यते। तद्व्यतिरिक्तानि चित्रबन्धात्मकानि स्वतन्त्रकाव्यान्यपि बहूनि सन्ति। तत्र कतिपयनामानि यथा—चित्रकवेश्चित्ररत्नाकरः, वेङ्कटेश्वरस्य चित्रबन्धरामायणम्, कविराजसूरे राघवपाण्डवीयम्, विद्यामाधवस्य पार्वतीरुक्मिणीयम्, चिदम्बरसुमतेर् राघवपाण्डवयादवीयम् (श्लेषस्य चूडान्तनिदर्शनमस्मिन्नर्थत्रयस्यैकत्र सन्निवेशात्), कृष्णमूर्तेः कङ्कणरामायणम्, श्रीकृष्णपरब्रह्मपरतन्त्रकालस्वामिनोऽलङ्कारमणिहारः, विश्वेश्वरस्य कवीन्द्रकर्णाभरणम् (काव्यमालागुच्छकोऽष्टमः) नागराजस्य भावशतकम् (काव्यमालागुच्छश्चतुर्थः, अस्मिन् प्रहेलिका विशेषेण निबद्धाः)।

स्तोत्रसाहित्ये चित्रबन्धानां विशिष्टं स्थानं दृश्यते। उपासनायां यन्त्रस्य माहात्म्यं सुविदितमेव। चित्रबन्धव्यञ्जिता आकृतयो यन्त्रसादृश्यं बिभ्रति, तत्सादृश्यप्रभावेण हि स्तोत्रेषु चित्रबन्धान्प्रति विशेषाभिरुचिर्जातेति नास्त्यकल्पनीयम्। स्तोतव्यं प्रति स्तोतुः स्वाभाविकोऽनुरागः, तयोर्मध्ये सामाजिकस्य भावार्थबोधस्य व्यवधानराहित्यञ्च, इत्यपि तत्र कारणत्वेन संभावयितुं शक्यते। स्तोतव्ये सकलगुणसमुदायस्य संभावनोचिता वर्तत इति हेतोः स्तोतुरुद्भावनात्मिका शक्तिरबाधभावेन सञ्चरितुं प्रभवति तेन चित्रनिर्माणे सौकर्यं भवतीत्यपि कारणं तत्र भवितुमर्हति। चित्रबन्धात्मकेषु बहुषु स्तोत्रकाव्येषु—आनन्दवर्धनाचार्यस्य देवीशतकम्, अवतारकवेरीश्वरशतकम् (द्वेऽपिकाव्यमालागुच्छकेऽष्टमे) वेङ्कटाध्वरेर्लक्ष्मीसहस्रञ्च उदाहर्तुं शक्यन्ते।

जैनस्तोत्रसाहित्ये चित्रबन्धकाव्यस्य महानुत्कर्षो जातः। द्विदलकमलबन्धादारभ्य सहस्रदलकमलपर्यन्तं रचना जैनाचार्यैः कृता। तत्रापि श्वेताम्बरसंप्रदायमन्तर्भुक्ता आचार्याश्चित्रकाव्यस्य पूर्णरसिका आसन्। तत्र कतिपयस्तोत्रनामानि यथा—समन्तभद्रस्वामिनो जिनशतकस्तुतिविद्या, जयतिलकसूरेश्चतुरहारावलिचित्रस्तवः। चित्रबन्धानां नवीनभेदानामुद्भावनेन जैनाचार्याणां योगदानमत्यन्तमहत्त्वपूर्णं विद्यते।

आधुनिकयुगे संभूतानां चित्रकवीनां नामोल्लेख उपसंहारे प्रासङ्गिक इति प्रतीयते। तत्र काशीवासिश्रीदुःखभञ्जनकविः (वाग्वल्लभाख्यछन्दोग्रन्थरचयिता, तस्य चित्रबन्धा नो प्रकाशिताः) श्रीरघुवीरमिश्रः (श्रीलक्ष्मीश्वरोपायनकर्ता) मगधवासी श्रीदामोदरमिश्रशास्त्री (चित्रबन्धकाव्यरचयिता)—इति नामानि समादरेण स्मरणीयान्यस्मिन् प्रस्तावे।

## ४. अन्यभारतीयभाषासु चित्रबन्धपरम्परा

प्राकृत-अपभ्रंश-साहित्येऽपि चित्रबन्धरचना कियन्मात्रायामुपलभ्यते। किन्त्वत्राधुनाप्रचलितभारतीयभाषाणां चित्रबन्धात्मकसाहित्यस्य विहंगावलोकनमेव प्रयोजनम्। तत्र हिन्दीभाषाया विशिष्टस्थानं वर्तते।

हिन्दीसाहित्यैतिहासिककालविभाजने रीतिकालनाम्ना ख्याते काले चित्रबन्धरचनाया महानुत्कर्षो जातः। केशवदास-भिखारीदास-लालकवि-गोकुलनाथ-दीनदयालगिरि-इत्यादि-कविवर्या अत्र विशेषेणोल्लेखनीयाः। तत्रापि किञ्चिदुदाहरणार्थम् आचार्यकेशवदासो दीनदयालगिरिश्चेतिकविद्वयमलं भविष्यतीति मन्ये।

**आचार्यकेशवदास :**

(खिष्टीयषोडशशताब्द्यां वर्तमानः)—अनेन स्वीयग्रन्थकविप्रियायां विशिष्टालङ्कार-वर्णनाख्ये पञ्चदश-'प्रभावे' यमकस्यानेकभेदा उदाहृताः, यथा—आदिपद-द्वितीयतृतीयचतुर्थ-चरण-आद्यन्त-त्रिपदादि-द्विपदादि-पादानुपादादि-द्विपादान्त-उत्तरार्धचतुष्पादादि-आद्यन्तनिरन्तर-आद्यन्तरसान्तर-इत्यादियमकानि। तदनन्तरं षोडशप्रभावे चित्रककवित्वस्य अनेकभेदा उदाहृताः। यथा निरोष्ठकरचना (ओष्ठ्यवर्णवर्जिता) अकारमात्रयुक्तैर्वर्णै रचना एकाक्षर-द्वयक्षर-त्र्यक्षर-चतुरक्षरपदयुक्ता रचना (प्रतिपदं कियन्त्यक्षराणि प्रयुज्यन्त इति नियमसमाश्रिता), प्रतिपद्यं कियन्त्यक्षराणि गृह्यन्त इति नियमानुरोधेन एकाक्षरबन्धात् समारभ्य षड्विंशत्यक्षरबन्धपर्यन्तं भेदा उदाहृताः। चतुरक्षरपद्यबन्धो यथा—

**बनमाली बन में मिले बनी नलिन बनमाल।**
**नयन मिली मन मन मिली बैन न मिली न बाल॥**

पद्येऽस्मिन् ब-ल-म-न इति अक्षरचतुष्टयमेव प्रयुक्तम्। यत्र प्रतिपदं वर्णसंख्या नियता तत्र 'सीतानाथ-सेतुनाथ-सत्यनाथ-रघुनाथ-व्रजनाथ-दीनानाथ-देवगति'—इतिसदृशी पद-रचना नियताक्षरसंख्यया भवति।

पदे पद्ये वा अक्षरनियमनादुत्पादितभेदप्रभेदानन्तरं प्रश्नोत्तरस्यानेकभेदा वर्णिताः। यथा एकानेकोत्तरं, व्यस्तसमस्तोत्तरं, व्यस्तगतागतोत्तरं, बहिर्लापिका (यत्रोत्तरं पद्यस्य बहिर्भागे वर्तते) अन्तर्लापिका (यत्रोत्तरं पद्यस्यान्तर्भाग एव समाविष्टम्), गुप्तोत्तरमित्यादयः। बहिर्लापिकोदाहरणं यथा—

**"अक्षर कौन विकल्प को, जुवति बसति किहि अंग।**
**बलिराजा कौने छले सुरपति के परसंग। वामन जानिबो॥"**

**अन्तर्लापिकोदाहरणम्—**

**"कौन जाति सीता सती, दई कौन कहँ तात।**
**कौन ग्रन्थ बरनी हरी, रामायन अवदात॥**

प्रश्नोत्तरस्य भेदवर्णनानन्तरमनुलोमविलोमक्रमेणैकार्थस्य भिन्नार्थस्य च गतागतैकार्थगतागतभिन्नार्थ-इतिसंज्ञाभ्यां निरूपणं दृश्यते गतागतैकार्थो यथा—

**"माल बनी बलि केशवदास सदा वश केलि बनी बलमा"**

**गतागतभिन्नार्थोदाहरणम्—**

**सैन न माधव को सर केशव रेख सुदेश सुवेश सबै।**
**नै नव की तचि जी तरुणी रुचि चीर सबै निमि काल फलै।**
**तै न सुनी जस भीर भरी, धर धीर' व रीति सु कौन कहै।**
**मैन मनी गुरु चाल चलै, शुभ सो बन में सर वीव लसै॥**

**विलोमक्रमेणास्यैव पद्यस्य निम्नोद्धृतं स्वरूपं भवति—**

**शैल बसी रस मे नव सोभ सुलय चल चारु गुनी मन मैं।**
**है वन कोसु तिरी बर धीर धरी भर भी सजनी सुन तै।**

**लय फल कामिनि वैस रची चिरु नीरु तजी चित की वन नै।**
**वैस सवेश सदेश खरे वस कै रस जो वध मान नसै॥**

पद्यस्य चरणचतुष्टये गतागतैकार्थस्य सन्निवेशे सर्वतोभद्रबन्धो निष्पद्यते। आकृत्यात्मक-चित्रबन्धेषु केशवदासेन चक्र-कमल-पर्वत-सर्वतोमुख-हार-डमरु-बन्धाः सोदाहरणं निरूपिताः।

(प्रस्तुतविवरणं हिन्दुस्तानीएकेडेमी-इलाहाबादतः प्रकाशित-पण्डितविश्वनाथमिश्रसंपादितकेशवग्रन्थावाल्ल्याः प्रथमखण्डाश्रितम्)

दीनदयालगिरिः

वर्षशताधिककालात्पूर्वं वर्तमानः प्रभूतप्रतिभाशाली काशीवासी कविरयं शब्दचित्रेऽर्थचित्रे रसवत्काव्ये च सिद्धहस्त आसीत्। अनेन बहुविधानि चित्रकाव्यानि रचितानि। कतिपयोदाहरणान्यत्र सहृदयानुरञ्जकानि भविष्यन्तीतिमन्वाना प्रवृत्तास्मि तदुद्धरणप्रसङ्गे।

१—मध्याक्षरी—मूलरोलाछन्दसि मध्ये द्रुतविलम्बितनिष्पत्तिः—

**गंगा जय जन जननि देवि संपद तन श्री तन।**
**हे मंजुलगति कलनि पुरातन शिव ता के गन।**
**कुसुम मलय तिल छिपा सुतट भावन जल पावन।**
**टरि भव भव भा करी सिवै तैं केते भुवि जन॥ १॥**

**परसे दिव्य विमान काम जित वपु ते पाये।**
**पाप ताप बिन जना सदा शिव लोकै छाये।**
**सनि तपनादि दिवेस शंभु श्री कुज गुरु सेवैं।**
**शंभु मुकुट उरु माल काल ससि दिवि के देवैं॥ २॥**

**संस्कृते द्रुतविलम्बितम्—**

**जननि संतत मंगलराशिके, कुमतिपाटनपाटवभासिके।**
**विपदि मामव पापविनाशिके, सपदि शं कुरु शं कुरु काशिके॥**

२—मध्यान्तरी अन्तर्लापिका—(पद्यस्यान्तर्भाग एव प्रश्ननामुत्तरसमावेशः—विस्तर-भयेन पद्यं नोदाह्रियते)।

३—अनेकानेकोत्तरम्—(अनेकप्रश्ननामेकोत्तरम्) यथा—

**वासर को कहैं कहा? कौन वाची औसर को?**
**कहा करैं बलि? कौन अली को सिंगार है?**
**वृन्द पर जाये कहा? कौन निन्द्यभाजन है?**
**पार के समान कौन प्रानिन को प्यार है?**
**कौन तरु नाम? कौन चाम पै रचे हैं स्याम?**
**केते रवि रूप? भूप का पै हितकार है?**
**कौन दीनद्याल देव? कौन की न कीजै सेव?**
**प्रश्न ये अनेक ज्वाब दीनों एक बार है।**

अत्र द्वादशप्रश्ननामेकोत्तरं वारपदेन न्यस्तम्। कोशे यथा—

**''वारः सूर्यादिदिवसे द्वारेऽवसरवृन्दयोः।**
**कुल वृक्षे हरे वारो वरं मद्यस्य भाजने।''**

४.—अर्धगतागतं सर्वगतागतञ्च, ५—षोडशदलकमलबन्धः, ६—डमरुबन्धः, ७—कपाटबन्धः, ८—द्वादशदलकमलबन्धः (निरोष्ठः), ९—चक्रबन्धः, १०—फणिबन्धः, ११. प्रश्नोत्तराणामनेकप्रकाराः, १२—सिंहावलोकनं (पद्यस्य प्रत्येकचरणान्त्यस्य पदस्य पदान्तस्य वा परचरणादौ सन्निवेशः), १३—काकावलोकनम् (अन्त्यानुप्रासविशेषः), १४—बहुविधयमकम्, १५—एकस्वरबन्धः, १६—लघ्वक्षरबन्धः, १७—मुद्रालङ्कारः (नामविशेषमुद्रया शिलष्टार्थसाधनम्। रामपरिकराणां, विशिष्टग्रन्थानां, छन्दसां, पुष्पाणां, सप्तवासराणां मुद्रया रचितं पद्यपञ्चकम्)। तत्र सिंहावलोकनस्य विशिष्टग्रन्थमुद्रायाश्चोदाहरणं यथा—

**सिंहावलोकनम्—**

धाई है कुमति तव विषै विष काँटनि में,
हरि की न छन भर चरचा चलाई है।
लाई है न प्रीति कहूँ सन्तन के संग जाय,
कबहुँ न काहू संग करो तू निकाई है।
काई है मलीन मन छाई अति दीनद्याल,
ताकी नहीं करे कूर रंचक उपाई है।
पाई है न कछू सब उमर गंवाई अजौ,
आई नहीं लाज सुने जम की बधाई है॥

**मुद्रालङ्कारः—**

ध्याय रघुवंश के कुमार को विहंग मन,
कामादिक हैं किरात ताहि जाल क्यों फँसै।
ऐसी विस्वमोहिनी प्रभा लखी न मेदिनी मैं,
देखत अमर जाहि प्रेमरस में रसैं।
जासु मुखचन्द की सुकौमुदी मनोरमा में,
चित्त चन्दसेखर हूँ को चकोर सो बसैं।
तासु अब दीनद्याल नाम लै शिरोमणि कै,
यही तत्त्वसार माँहि मुकतावली लसै॥

(नागरीप्रचारिणीसभातः १९८९तमे ख्रिष्टाब्दे प्रकाशित-श्यामसुन्दरदाससंपादितदीनदयालगिरिग्रन्थावलीतः संगृहीतं विवरणमिदम्।)

**भक्तप्रवरतुलसीदासाः—**

एभिश्चित्रबन्धनिर्माणे अभिनिवेशपूर्वकं संरम्भो न कृतः किन्तु सिद्धकवीनामेषां गिरोऽनायासमेव नानाविधैश्चित्रैश्चित्रिता दृश्यन्ते। शहडोलनिवासिपण्डितचन्द्रभूषणतिवारिमहोदयै रामचरितमानसे छत्र-खड्ग-नाल-सनालपद्म-त्रिशूल-नाग-मयूर-किरीट-अश्वगतिबन्धा अन्वेषणपूर्वकं प्रकटीकृताः। उदाहरणार्थं—'नमामि भक्तवत्सलं कृपालुशीलकोमलं, भजामि ते पदाम्बुजं, अकामिनां स्वधामदं'—इतिपद्यमश्वगतिबन्धे सुष्टु न्यस्तं यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| न[१] | पा[१०] | मि[३] | शी[१२] | व[५] | को[१४] | स[७] | लं[१६] |
| भ[१७] | का[२६] | मि[१९] | ना[२८] | प[२१] | धा[३०] | बु[२३] | दं[३२] |
| कृ[९] | मा[२] | लु[११] | भ[४] | ल[१३] | व[६] | म[१५] | लं[८] |
| अ[२५] | जा[१८] | मि[२७] | ते[२०] | स्व[२९] | दां[२२] | म[३१] | जं[२४] |

**छत्रबन्धे 'आगे चले बहुरि रघुराया रिष्यमूकपर्वत नियराया' इति पद्यांशो न्यस्तो यथा—**

या

या रा या

या रा घु रा या

या रा घु र घु रा या

या रा घु र रि र घु रा या

या रा घु र रि हु रि र घु रा या

या रा घु र रि हु ब हु रि र घु रा या

या रा घु र रि हु ब ले ब हु रि र घु रा या

या रा घु र रि हु ब ले च ले ब हु रि र घु रा या

या रा घु र रि हु ब ले च गे च ले ब हु रि र घु रा या

या रा घु र रि हु ब ले च गे आ गे च ले ब हु रि र घु रा या

रि

ष्य

मू

क

प

र्व

त

नि

य

रा

या

उदाहरणद्वयेऽस्मिन् न्यास-वैशिष्ट्यमेव, न तु वर्णावृत्तिवैशिष्ट्यम्।

हिन्दीभाषायां चित्रबन्धनिर्माणस्याल्पपरिचयानन्तरमन्यभारतीयभाषासु तथाविधसाहित्यसद्भावस्योल्लेखमात्रं प्रयोजनसाधकं भविष्यति।

**गुर्जरभाषा**—श्रीदलपति-मनसुखभाई-खबरदार-प्रभृतयः कतिपयजैनाचार्याश्च चित्रकाव्यनिर्मातारस्तत्साहित्ये प्रमुखरूपेणोल्लेखनीयाः।

**महाराष्ट्रभाषा**—अस्यां चित्रकाव्यारम्भो रुक्मिणीस्वयंवराख्यकाव्यस्य निर्मातुः श्रीविट्ठलकवितो मन्यते। कविमोरोपन्तः (मयूरपन्तः) अम्लानमालाबन्ध-मन्त्ररामायण-किन्तुरामायण-परन्तुरामायणादि काव्यानि निर्मितवान्। श्रीपालन्देमहाशयेन सैरन्ध्रीनाटके कतिपया आकृतिबन्धा दत्ताः। 'षण्मासींचा वायदा' संज्ञकपुस्तके कूटपद्यानां प्रहेलिकानां च निरूपणं वर्तते।

**उत्कलभाषा**—परमसमृद्धिमत्साहित्येऽस्मिन् उपेन्द्रभञ्जः तत्पिता च चित्रकविवरौ जातौ। एकदेवस्तुतौ विविधगतिपाठेनानेक-देवस्तुतिपरकता तयोः काव्यस्य वैशिष्ट्यम्।

**कर्णाटभाषा**—सिरीभूवलसंज्ञके ग्रन्थे समान-चक्र-चतुष्कोण-त्रिकोण-विपरीतादि-गतिभिः पठनेनानेकभाषाणामनेकविषयाणां च सद्भाव उपलभ्यते। ग्रन्थोऽयं सर्वज्ञग्रन्थ इति नाम्ना ख्यातः।

**बङ्गभाषा**—बङ्ग-नयपाली-आदिभाषास्वपि समृद्धिमती चित्रकाव्यपरम्परा प्राप्यते।

(विवरणमिदं यत्किञ्चिदुदाहरणसङ्केतात्मकमेव, तत्र पूर्णताया लेशमात्रं नास्तीतिज्ञापनाद् विज्ञपाठकैश्छिद्राणि क्षन्तव्यानि। प्रचलितभारतीयभाषासु चित्रकाव्यस्य सद् भावस्य दिग्दर्शनमेवात्र प्रयोजनम्।)

## ५. प्रस्तुतग्रन्थस्य वैशिष्ट्यम्

प्रस्तुतग्रन्थे चित्रकाव्यस्याकृतिमूलका भेदा एव निबद्धाः। तत्र सर्वविलक्षणवैशिष्ट्यमिदमेव यत् प्रायेण सर्वेषु बन्धेषु आकृतेर्नाम्नोऽर्थस्य तद्बन्धात्मकपद्ये सम्यङ् निवेशः कृतः। यथा पद्मबन्धे पद्मस्य समानार्थपदानां, गजबन्धे गजाननस्य, वृषबन्धे नन्दिनः, शिविकाबन्धे शिविकायाः, कूपबन्धे कूपस्य, गदाबन्धे गदायाः, मालाबन्धे मालायाः, वृक्षबन्धे वृक्षस्य, दर्पणबन्धे दर्पणस्य, धनुर्बन्धे धनुषः, एवमेवान्येष्वनेकेषु बन्धेषु बन्धनाम्नोऽर्थतादात्म्यं बन्धपद्ये दृश्यते। अत्र चित्रकविपण्डितरामरूपाणामपूर्वकौशलं सुज्ञजनैः श्लाघनीयम्। चित्रबन्धानां प्रायिकी क्लिष्टताऽस्माकं चित्रकवेः प्रसादगुणवैभवे निष्प्रभा संवृत्ता। तथा च चित्रबन्धेषु लौकिकविषयान् वर्जयित्वाऽलौकिकदेवदेवीसंबद्धविषयानेव गृहीतवान् पण्डितरामरूपपाठकः।

आधुनिकयुगे जातस्य चित्रकविश्रीदामोदरशास्त्रिणश्चित्रबन्धकाव्यमित्याख्यो ग्रन्थः पंडितरामरूपस्य मुख्योपजीव्यः। तेन द्वित्रा नवीना बन्धभेदा अप्युद्भाविता यथा तिलकबन्धः, पद्मबन्धस्य प्रकारविशेषः।

बन्धनाम्नः पद्यार्थे ग्रहणम्, प्रसादगुणोपेतत्वेन क्लिष्टतापेतत्वम्, अलौकिकविषयेषु स्वारस्यम्, नवीनबन्धनिर्माणपाटवञ्च इति गुणचतुष्टयं पण्डितरामरूपपाठकस्य ग्रन्थमिमं संस्कृतसाहित्यस्य चित्रकाव्यभागे विशिष्टस्थानभाजनं करिष्यतीत्यलमतिविस्तरेण।

संस्कृतसाहित्यस्य सर्जनात्मिका प्रतिभाऽद्यापि सम्पूर्णभास्वरा विराजत इति सत्यस्य निदर्शनरूपोऽयं ग्रन्थः।



## द्वितीय खण्ड
(१८३-४०७)

### सङ्गीत-नाट्य-काव्यात्मक विविध कृतियाँ

## ·१.

# ''सङ्गीतोपयोगि-संस्कृत''-ग्रन्थस्य परिशिष्टम्*

(क) संवाद-वैभवम्
(ख) गीतावली (सङ्गीतलिपिसंवलिता)
(ग) वृत्तगानपद्धतिनिर्देशः (सङ्गीतलिपिसमेतः)
(घ) अध्यक्षीय भाषणम्—डॉ० पद्मा-मिश्र
(ङ) ग्रन्थोपरि आशीर्वचनम्—महेशानन्द-गिरि-स्वामिनः

## विवृत-विषयानुक्रमणी

### (क) संवादाः

(१) सङ्गीतशास्त्राध्ययने संस्कृतज्ञानस्योपकारकत्वम्
(२) राग-स्वरूप-विचारः
(३) गवेषण-गोष्ठी
(४) अनुसन्धान-कार्य-परिचयः
(५) नैराश्य-परिहारः
(६) पारिभाषिक-शब्द-विमर्शः

### (ख) गीतावली

(१) 'सुरभारती जयति'—हमीर-केदार-रागः, चौताल-तालः
(२) 'वन्दे नादतनुम्'—देश-तिलककामोद-रागः, चौताल-तालः
(३) 'नन्दसुतेन वादिता वंशी' भीमपलासी-रागः, त्रिताल-तालः

### (ग) वृत्तगानपद्धतिः

(१) विषयावतारणम्
(२) अनुष्टुप्-शार्दूलविक्रीडित-स्रग्धरा-वृत्तेषु रचितानां कालिदासीय-मङ्गलपद्यानां गानात्मकरूपम्
(३) वसन्ततिलकावृत्ते निबद्धस्य श्रीमद्भागवतान्तर्गत-वेणुगीतस्य गानमयरूपम्
(४) प्रमाणिका-पञ्चचामर-भुजङ्गप्रयात-त्रोटकवृत्तानां गानपद्धतिः
(५) उपसंहारः

### (घ)—(ङ)—यथोपरि सङ्केतितम्

* श्रीमती विमला मुसलगाँवकर-रचित ''सङ्गीतोपयोगी संस्कृत'' के द्वितीय भाग में बहिनजी की अनेक संस्कृत-रचनायें 'परिशिष्ट' में दी गयी थीं—वे सब यहाँ संगृहीत हैं। अपने सङ्गीतशास्त्र-विभाग में वे कितने प्रकार से शिक्षण दिया करती थीं, उसका यह कुछ उदाहरण है। —ऊर्मिला

# (क) संवाद-वैभवम् *

## (१) सङ्गीतशास्त्राध्ययने संस्कृतज्ञानस्योपकारकत्वम्

१. संस्कृतदिवसमुपलक्ष्य आयोज्यमाने अस्मिन् उत्सवे संगीतशास्त्राध्ययने संस्कृतस्य उपयोगितामधिकृत्य किञ्चित् पुनरवधारणं, कोऽपि पुनर्विचारः स्वचित्तस्य दृढप्रत्ययार्थम् अस्माकं कृते परमोपकारको भवितुमर्हतीति मे मतिः। अत्रोपस्थितानां सर्वेषामनुज्ञाम् अभ्यर्थये।

२. सर्वथा श्लाघनीयोऽयं प्रस्तावः।

३. अत्र श्रोतॄणामपि हितकरः प्रीतिकरश्चायं भविष्यतीति प्रतिभाति मे।

४. भारतस्य पूर्व-दक्षिण-पश्चिम-उत्तर-प्रदेशानां प्रतीकस्वरूपा वयमत्र तिष्ठामः। अतोऽस्माकं विचारगोष्ठीयं सार्वभारतिकी भवितुमर्हति।

१. बाढम्, भारतस्य विश्वविद्यालयानां हृदयस्वरूपं काशी-हिन्दू-विश्व-विद्यालयस्थिता वयमिति खलु, सुमहदस्माकं दायित्वम्।

२. 'हिन्दु' शब्दस्य रक्षार्थे कृतसंरम्भा वयं, किन्तु हिन्दू-शब्द-संश्लिष्ट-नामधारिणि विश्वविद्यालयेऽस्मिन् हिन्दू-शास्त्राणामध्ययनस्य, तत्र श्रद्धाया उदभावनस्य च या महती दायित्वभावना अत्रस्थानां सर्वेषां जनानां हृदि जाज्वल्यमाना भवितुमर्हति, सा तु सुदूरपराहतैव दृश्यते।

३. नहि परचर्चाया अयमवसरः। अद्य तु स्वकीयदायित्वपालनाय चित्तस्य सर्वथा निश्चलत्वसाधनमेव अस्माकमिष्टम्।

४. अतिलघुकायेऽस्मिन् विभागे अङ्गुल्यग्रगण्या ये केचिद् वयं स्थिताः, तेषां तासां वा स्वकर्तव्यावधारणमेवं अस्या गोष्ठ्याः प्रयोजनम्। आकारलाघवात् यदि अत्रस्थानां केषामपि चित्ते किमपि शैथिल्यं, कापि दीनता गन्धमात्रेणपि स्थिता स्यात्, तर्हि तस्या उन्मूलनमपि स्वत एव भविष्यतीति मत्वा स्वसंकल्पस्य दृढता एव साधनीया।

१. **अन्धकारस्य तिरस्कारोपेक्षया आलोकस्य वरणमेव वरेण्यम्।** भावात्मक-साधनेन अभावस्तु स्वत एव विलीयते, विधेः पालनेन निषेधस्य अपेक्षाऽपि दूरीभवति।

२. नाम-मात्र-स्मृति-शेषाणां भरत-मतङ्ग-अभिनव-शार्ङ्गदेव-प्रभृति-मनीषिणां विषय-प्रतिपादनं प्रत्यक्षं तेषामेव वाण्यामधीत्य तेषां हार्दस्य अवधारणमस्माभिः सर्वप्रथमं कर्तव्यम्।

३. तत्तु भवतु नाम, किन्तु अद्यतनीयलक्ष्यम् उररीकृत्य प्राचीन-मध्ययुगीन-शास्त्राणां प्रतिपाद्यविषयस्य अर्थनिर्णयो व्याख्या वा कर्तव्या, न तु लक्ष्यम् उपेक्ष्यैव।

४. सत्यम्, किन्तु तत्र महद्भयस्थानमेकं वर्तते।

१. किं तत् ?

४. प्राचीनानां हृद्गताभिप्राये प्रवेशोऽस्माकम् अवरुद्धोऽपि भवितुमर्हति यदि तेषां सम-कालिकं लक्ष्यम् अद्यतनं लक्ष्यं च अभिन्नं मत्वा तत्र प्रयत्नः क्रियेत।

४. सर्वथा सत्यम्। दृष्टेर्निर्मलीकरणं तु अत्यावश्यकम्। परन्तु तत्र दिव्याञ्जनं कुत्र लभेमहि ?

२. प्राचीनानां हृदि प्रवेशं लब्धुकामैः सर्वप्रथमं, तेषामेव शब्दानामाश्रयणं कर्तव्यम्। स्वकीय-पूर्वनिश्चितधारणाभ्यो मनो मुक्त्वा

---

* अपने सङ्गीतशास्त्रविभाग में राष्ट्रीय संस्कृतदिवस का समारोह पू० बहिनजी करती थीं, जिसमें विद्यार्थियों के लिए संवाद, छोटे भाषण तथा विविध प्रकार के 'गेय' पद्य ध्रुपद आदि संस्कृत में स्वयं बना देती थीं। उन्हीं में से कुछ रचनायें यहाँ संगृहीत हैं। —ऊर्मिला

तेषां वचसामालोके एव अर्थस्यान्वेषणम् उचितम्।

३. अहो महिमा संस्कृतशब्दानाम्। तत्र व्युत्पत्तिनिमित्तं प्रवृत्तिनिमित्तं चेत्युभयमपेक्ष्य अर्थनिर्धारणं सुफलदायकम्।

४. सत्यमेव संस्कृतशब्दानाम् अपूर्वा कापि माधुरी, सुमहत् किञ्चिदर्थ-गाम्भीर्यम्, निर्मलदृष्टया आविष्करणीयं किमपि सारगर्भत्वं, बुधजनैक-गोचरः कोऽपि चमत्कारः। एते सर्वे गुणाः संगीतशास्त्रेऽपि भृशम् उपलभ्यन्ते।

१. शब्देष्वेव सङ्गीतस्य दर्शनं, इतिहासः वैचित्र्यं च निहितम् अस्माकं मनीषिभिः। एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः कामधुग् भवतीति पतञ्जलिमुनेरुक्तिः अस्माकं सङ्गीतशास्त्रे सर्वथा समीचीनेति अनुभूयते अस्माभिः।

२. शब्दानामर्थ-विवेचनं यदि सुष्ठु साधितं स्यादस्माभिस्तर्हि शास्त्रगत-रहस्यानां कुञ्जिका सुलभा भविष्यतीति नास्त्यत्र सन्देहस्यावसरः।

३. सङ्गीतशास्त्रगतशब्दभाण्डारस्य त्रिविधा गतिः दृश्यते। केऽपि शब्दा अर्थपरिवर्तनं विना अधुनाऽपि प्रचलन्ति। यथाहि, स्वर राग-ताल प्रभृतयः। केऽपि शब्दा भिन्नार्थे प्रचलन्ति। यथा हि, वादि-संवादि-विवादि-अनुवादि-ग्रह-अंशप्रभृतयः। केऽपि सर्वथा लुप्ताः। यथा हि स्थाय-गीति-धातु-करण-प्रभृतयः।

४. यथार्थेयम् उक्तिः। तत्र येषु शब्देषु अर्थपरिवर्तनं बाह्यदृष्टया न दृश्यते तत्रापि व्युत्पत्तिनिमित्तस्य प्रवृत्तिनिमित्तस्य च बोधेन नवीनम् अर्थज्ञानं भवितुमर्हति। 'वादन' शब्दो वाद्यशब्दो वा प्राचीनाभिन्नार्थे प्रचलति। किन्तु तत्र 'वद' धातोर्णिजन्त-प्रयोगेण स्वयं वदनं न कृत्वा वाद्ययन्त्रद्वारा वादनमभिप्रेतम्।

१. अहो कियान् अस्माकं कार्यभारः। प्रचलित-संस्कृत-शब्दानां व्युत्पत्ति-प्रवृत्तिनिमित्तापेक्षया अर्थान्वेषणं, तत्र अर्थपरिवर्तनस्य स्वरूप-निर्धारणं, लुप्तशब्दानामुद्धारः, प्रचलितदेशजशब्दानामुचितस्थान-निर्धारणं च।

२. किं बहुना, अस्मिन् गुरुतरे कार्ये संस्कृत-भाषाज्ञानमनिवार्यरूपेणावश्यक- मिति एव अद्यतनः प्रकृतो विषयः, इयमेव प्रस्तुता वार्ता।

३. अर्थसंकोच-अर्थविस्तार-अर्थविपर्यय-अर्थलोपप्रभृतिभिः दुरवगाह-कान्तारभूते शब्द समूहे नवीनपथनिर्माणं सुदुष्करमेव।

४. किन्तु नहि तत्र नैराश्यस्य पराभवस्य वा औचित्यम्।

१. उत्साहं धारयन्तः,

२. श्रद्दधानाः सन्तः,

३. तप आचरन्तः,

४. सत्यान्वेषणपथि चरिष्यामः। तत्रैकोऽपि चरणक्रमः संतोषावहो भविष्यति। इति शम्।

## ( २ ) रागस्वरूपविचारः

१. रागो हि नाम उज्ज्वलतमं रत्नं भारतीयसङ्गीतपद्धतेः। तदद्य रागमधिकृत्य काऽपि शास्त्रीय-चर्चा प्रवर्तताम् अस्यां गोष्ठ्याम्।

२. रागशब्दस्य अर्थद्वयं सुविदितं रञ्जकता, स्वरसन्निवेशश्च। प्रथमार्थे—शब्दस्यास्य प्रयोगो नाट्यशास्त्राद् उदाहरामि—'यस्मिन् वसति रागस्तु यस्माच्चैव प्रवर्तते'।

**स्वरसन्निवेशरूप-रागशब्दस्य साङ्गोपाङ्ग-प्रयोगो मतङ्गस्य बृहद्देश्यां सर्वप्रथमं दृश्यते।**

३. उक्तं च मतङ्गेन—

**''रागमार्गस्य यद्रूपं यन्नोक्तं भरतादिभिः।''**

**रागस्य सामान्यलक्षणमपि तत्रैव सर्वप्रथममुपलभ्यते। यथा—**

"योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः।
रञ्जको जनचित्तानां स रागः कथितो बुधैः"॥

४. रागद्वेषस्य द्वन्द्वं तु सुविदितमेव। यः स्वरसन्निवेशः चित्तं रञ्जयितुं समर्थः, यो वा श्रोतृचित्तं भावविशेषे निमज्जयितुं प्रभवति स एव रागशब्दवाच्यः। रागद्वेषस्य द्वन्द्वात् चित्तस्य मोचको हि सः।

१. बाढम्, सत्यमुक्तं भवद्भिः। राग-शब्दस्य प्रेमार्थम् अधिकृत्य बहु शोभनमुक्तं नृपतिकुम्भेन। तस्य श्रावणे लुब्धं मे मनः।

भवानीपादपद्मानुरागरञ्जितचेतसा।
क्रियते राजराजेन विशुद्धा रागपद्धतिः॥
यो विरागी स्मृतः कामविकामीकरणे बुधः।
तं रागिणं गिरिसुतावदने नौमि शंकरम्॥
रागो रामाश्रयत्वेन, वर्धते प्रायशो यतः।
ततो मे वर्धतामेष, रागो रामाश्रयः सदा॥

२. अहो कियात् चमत्कारो यमकस्य। साधु, साधु। स्वरसन्निवेशस्य विशिष्टत्व-व्यञ्जनाय प्रेम-वर्ण-प्रभृति-विभिन्नार्थ-समन्वितो रागशब्दः प्रयुक्तो मनीषिभिः चिरन्तनैः।

३. स्वरसन्निवेशे वैशिष्ट्यस्य आधानं भवति ग्रह-अंश प्रभृतिभिर्दशलक्षणैः त्रयोदशलक्षणैर्वा।

४. रागस्य नादमयं देवतामयं चेति रूपद्वयं कल्पितमस्माकं शास्त्रेषु। तत्र देवतामयरूपस्य निरूपणे तन्त्रस्य प्रभावः सुस्पष्टं परिलक्ष्यते।

१. स तु परिलक्ष्यते एव। षाश-खड्ग-अंकुशप्रभृत्यायुधानां यान-वाहन-वर्ण-प्रभृतीनां च तत्र ग्रहणेन तान्त्रिकपद्धत्यनुसारिणी उपासना एव सूचिता।

२. अहो भवद्भ्यां तु रागध्यानस्य महान् विषयोऽस्माकं स्मृतिपथम् आनीतः। यथा तान्त्रिकपद्धत्यनुसारीणि रागध्यानानि सुविपुलानि उपलभ्यन्ते तथैव नायक-नायिका-भेदानुसारीणि अपि बहुलानि दृश्यन्ते। सुविस्तरोऽयं रागध्यानस्य विषयः।

३. अहो, रागध्यानस्य नामश्रवणमात्रेण भैरवरागस्य ध्यानमारोहति मम स्मृतिपथम्।

गङ्गाधरः शशिकलातिलकस्त्रिनेत्रः
सर्पैर्विभूषिततनुर्गजकृत्तिवासः।
भास्वत्त्रिशूलकर एष नृमुण्डधारी,
शुभ्राम्बरो जयति भैरव आदिरागः।

किन्तु समयसाङ्कर्येण बिभेति मे मनः। विपुलकार्यभरावनता अत्रत्याः सभासदः।

४. सत्यम्। अपरं कमप्यवसरमवलम्ब्य रागध्यानमधिकृत्यैव एका गोष्ठी योजनीया। अद्य तु रामरक्षा-स्तोत्रस्य उपान्त्यपद्यस्य आदर्शानुसारेण निर्मितं रागस्तुतिपरं पद्यमेकं श्रावयितुमिच्छामि। तदनन्तरं गोष्ठ्या विसर्जनं भवतु इति सुष्ठु प्रतिभाति मे।

१. तदेव भवतु नाम।

४. रागो रञ्जनकृन्मुदा विजयते, रागं हि याचे सदा
रागेणैव कृतं मनः सुविमलं, रागाय तस्मै नमः।
रागान्नास्ति सुगायनं परतरं, रागस्य सेवी त्वहं
रागे चित्तलयः सदा भवतु मे, भो राग! मां रञ्जय॥

## (३) गवेषण-गोष्ठी

१. अद्य खलु महानन्दस्य अवसरः समुपस्थितः। अनेके संस्कृतानुरागिणः सङ्गीतानुरागिणश्च सामाजिकाः अत्र समवेताः अस्मिन् सहृदय-समाजे अस्माकम् अनुसन्धानकार्यस्य किञ्चिद् विवरणं यदि प्रस्तूयेत तर्हि संस्कृतदिवसस्य अनुष्ठानम् इदं सुष्ठुतरं भवितुमर्हतीति मन्ये किं तत्र भवतां भवतीनां च अनुज्ञा वर्तते वा न वा?

२. कोऽत्र सन्देहः। अस्माकम् अनुसन्धानकार्ये संस्कृतभाषाज्ञानस्य कियदुपयोगित्वं तत्तु अनेनैव विवरणेन प्रकटीकृतं स्यात्।

३. बहु शोभनम्। अत्रास्माकं कार्यविवरणस्य अवतारणेऽत्र प्रस्तोता कः भविष्यति?

४. अत्रभवती (इन्द्राणीदेवीं प्रति निर्देशयन्ती) एव प्रस्तोत्री स्यादिति मम मतम्।

५. बाढम्।

१. तदेव भवतु नाम। 'आज्ञा गुरूणामनुल्लङ्घनीया'। अत्रभवत्याः अनुसन्धान-कार्यस्य विषयनिर्देशाय एव सर्वप्रथमम् अनुज्ञां याचे।

४. तथास्तु।

१. अत्रभवती **मुसलगाँवकरोपाधिधारिणी विमलादेवी** अस्मिन् विभागे संस्कृताध्यापिकारूपेण नियुक्ता। संगीतशास्त्रे विभिन्नदर्शनशास्त्राणां योगदानमिति विषयमधिकृत्य अत्रभवती अनुसन्धानकार्ये संलग्ना।

२. अहो महान् गम्भीरोऽयं विषयः। अत्र किञ्चित् श्रोतुं समुत्सुका इयं सभा इति प्रतिभाति मे।

४. सङ्गीतशास्त्रे योगस्य तन्त्रस्य च विपुलः प्रभावो दृश्यते। तत्र नाद-महिमा, आहतानाहतनादभेदौ, पिण्डे आहतनादस्य उत्पत्तिक्रमः, षट्-चक्र-वर्णनम्, स्वराणां वर्ण-द्वीप-बीजाक्षरेत्यादि-निरूपणम्, राग-रागिणीनां देवतामयरूपस्य ध्यानण्द्धतिः इत्यादिरूपेण हठयोगस्य तान्त्रिकोपासनायाश्च समावेशो भूरितरमुपलभ्यते।

३. तत्र वैदिकविचारधाराया; कोऽपि अवशेषो वर्तते वा न वेति ज्ञातुं कुतूहलाविष्टं मे मनः।

४. स तु वर्तते एव। स्वराणामृषिदैवतच्छन्दसां निर्देशः, मूर्च्छना-तानानां यज्ञनामानि, सृष्टिक्रमनिरूपणम्, वाक्-प्राण-मन-इतिकरणत्रयस्य स्वीकारः इत्यादिरूपेण वैदिक-सरणेः अनुसरणं सुस्पष्टमेव।

५. आम्।

१. साङ्ख्य-पूर्वमीमांसा-उत्तरमीमांसादिदर्शनानां सङ्गीतशास्त्रे किमपि स्थानं दृश्यते वा न वा इति श्रोतुं समुत्सुका वयम्।

४. त्रिगुणसिद्धान्तः, सर्वविषयेषु बहुशो भेदोपभेदगणनं च सांङ्ख्य-दर्शनस्यैव प्रभावं द्योतयतः; पूर्वमीमांसातो दृष्टादृष्टफलस्य विचारः, उत्तरमीमांसातो जीवब्रह्म-निरूपणम् इत्यादिरूपेण एतेषां दर्शनानां योगदानं भृशम् उपलभ्यते।

५. एवम्।

१. अत्रभवती **कालविण्टोपाधिधारिणी विद्यादेवी** सुस्वरा संस्कृतज्ञा च। भरत-नाट्यशास्त्रे गान्धर्वनिरूपणपरस्य अध्यायषट्कस्य विश्लेषणं व्याख्यां च अधिकृत्य अनुसन्धाने व्यापृता अत्रभवती।

२. अहो। अतिदुरूहमिदम् अनुसन्धानकर्म।

३. सत्यं भणितं भवता। नाट्यशास्त्रस्य सूत्रात्मिकया रीत्या, तद्व्याख्यातृणामभिनव-गुप्त-पादानां च व्याख्यायाः पाठभ्रंशेन कान्तारभूते ग्रन्थे अर्थावबोधाय पथनिर्माणं अतिशयदुष्करमिति स्वानुभवेन जाने।

४. तत्तु दुरूहत्वं ममापि अनुभवपथम् आगतम्।

१. दुरवगाहस्य ग्रन्थस्यास्य अध्ययने यावत्परिश्रमः अपेक्षितः, तस्य तुल्य-परिमाणेन साफल्यं भवितुमर्हति वा न वेति प्रश्नेन आकुलितं मे मनः।

२. सर्वथा अयुक्तोऽयं प्रश्नः।

३. नहि प्रश्नः कोऽपि दोषावहः।

४. प्रश्नविमर्शेन तु स्वचित्तस्या दृढतैव साधनीया। ततो हेतोः प्रश्नानां सदैव स्वागतं विधेयम्।

५. एवमेव।

३. भरतनाट्यशास्त्रस्याध्ययनं तु सङ्गीतशास्त्रस्य गम्भीरालोचने भित्ति-स्वरूपम्; भित्तिं विना न कोऽपि प्रासादो निर्मितो अद्यावधि केनापि।

४. केवलं महिमख्यापनेन न हि किमपि सिद्ध्यति।

३. महिमख्यापनाय नास्ति कोऽपि संरम्भोऽत्र। किन्तु स्वर-श्रुति-ग्राम-मूर्च्छना-रागजननी-जाति-गीतक-ध्रुवा-वाद्यभेद-इत्यादिविषये मौलिक-चिन्तनस्य यो निर्यासो नाट्यशास्त्रे उपलभ्यते तस्यावगमार्थं कृतपरिश्रमाः न कदापि नैराश्यं वैकल्यं वानुभवितुमर्हन्ति।

५. सत्यम्।

३. नाट्यशास्त्रे प्रवेशद्वारमुद्घाटयन्ती अभिनवभारती पाठभ्रंशदोषेण यद्यपि अंशमात्रेणैव अवगम्यते तथापि तदर्थं कृतः परिश्रमः महते लाभाय एव भवितुमर्हति।

१. सुष्ठु। भवत्याः कठोर-परिश्रमेण सङ्गीतशास्त्रे अन्वेषणक्रमः समृद्धिमवाप्स्यति इति अस्माकं दृढा आशा। अत्रभवान् **रामनाथन्** महोदयः तिरुपति-स्थितात् वेङ्कटेश्वर-विश्वविद्यालयात् स्नातको भूत्वाऽत्र आगतः साम्प्रतं सङ्गीतरत्नाकरे गीतनिरूपणस्य संशोधने व्यापृतोऽत्र-भवान्।

३. सर्वथोपयोगी ह्ययं विषयः।

२. सङ्गीतरत्नाकरस्तु रत्नानामाकर एव।

४. गीतशब्देन कोऽर्थः अवबुध्यते भवता?

२. सामान्यरूपेण गीतशब्देन कण्ठे गायन-व्यापारः तद्व्यापारस्य विषयो वा गृह्यते, किन्तु शास्त्रीयरूपेण गीतशब्दः स्वर-ताल-पदात्मके गान्धर्वे स्वरांशस्य मुख्यतया बोधकः। गौणरूपेण पदांशोऽप्यस्मिन् समाविष्टः।

३. एवम्। तर्हि गीतनिरूपणं सङ्गीतरत्नाकरस्य स्वराध्याये, रागाध्याये, प्रकीर्णकाध्याये, प्रबन्धाध्याये च उपलभ्यते।

२. सत्यम्। इदम् अध्याय-चतुष्टयमेव ममाध्ययनस्य गोचरम्।

४. सङ्गीतरत्नाकरस्य स्वराध्यायस्य द्वितीये प्रकरणे पिण्डोत्पत्तेर्यन्निरूपणं दृश्यते तत्तु सर्वथैव विलक्षणम्।

२. बाढम्। तत्र तु वेदान्तानुसारेण ब्रह्म-जीव-सृष्टिनिरूपणम्, आयुर्वेदानुसारेण च मनुष्यदेहस्य गर्भाधानादारभ्य विकासक्रमवर्णनं तस्याङ्गोपाङ्गनिरूपणं च सङ्गीतरत्नाकरस्य अनन्यवैशिष्ट्यम्।

५. अतिशयरोचकोऽयं विषयः।

१. **शीतलो**पाधिधारिणी श्रीमती **भूपेन्द्रम**होदया सुशारीरी सुगायनी च। अत्रत्ये महिला-महाविद्यालये सङ्गीतप्राध्यापिकापदे नियुक्ता सती भारतीयसङ्गीते भातखण्डेमहोदयस्य अवदानस्य मूल्याङ्कनमधिकृत्य गवेषणकर्मणि संलग्ना अत्रभवती।

२. सर्वथा आधुनिकोऽयं विषयः।

४. आधुनिके सत्यप्यस्मिन् विषये गवेषणसौष्ठवाय अत्रापि संस्कृतज्ञानमपेक्ष्यते एव।

५. सत्यम्।

३. वर्तमानयुगे भारतीयसङ्गीतस्य शिक्षणक्रमे शास्त्रीयाध्ययनक्रमे च भातखण्डेमहोदयानां अवदानं तु सुविदितमेव।

५. किन्तु भातखण्डेमहोदयस्य कृतित्वं निन्दायाः प्रशंसाया वा पात्रं जातम् अद्यावधि। निष्पक्षरूपेण तस्याध्ययनमेव मम प्रयोजनम्।

४. आम्, सम्यग् ज्ञातमधुना। (इन्द्राणीमवलोक्य) भवत्याः कार्यं-विवरणमेव साम्प्रतम् आकाङ्क्षितम् अस्माकम्।

३. (इन्द्राणीमवलोक्य) अत्रभवत्याः परिचयस्तु (विमलादेवीं निर्देश्य) भवत्या एव कथनीयः।

४. **चक्रवर्तीत्युपाधिधारिणी इन्द्राणी** महोदया सितारवादने कुशला, वादन-विषये स्नात्तकोत्तरोपाधिनाऽलंकृता च। भारतीयसंगीतपद्धत्यां स्वरस्य रागस्य च शास्त्रीयप्रतिपादनस्य विकासक्रमे वाद्यानां योगदानस्याविष्करणमेव भवत्या साध्यम्।

२. अतीवगरिष्ठोऽयं विषयः।

१. सत्यम्। सारिकायुक्तेषु, सारिकाविहीनेषु च ततवाद्येषु, एवमेव सुषिर-वाद्येष्वपि ग्राम-मूर्च्छनापद्धतिः कथं व्यवहृता आसीत्, तत्पद्धतेरुच्छेदकाले च वाद्येषु किं किं परिवर्तनं जातं, रागाणां मार्गदेशीरूपेण विभाजनं वाद्यैः सह कथं सम्बद्धम् इति प्रश्नत्रयमेव मुख्यरूपेण मम गवेषणगोचरम्।

३. किन्त्वत्र निर्भ्रान्तोत्तर-लाभस्तु सुदुष्कर एव।

१. सुदुष्करत्वं हि नैवात्र पराभवस्य कारणम्।

२. बाढम्। प्रभूतेन तपसाऽत्र सत्योपलब्धिः स्यादेव।

४. वाद्यानामितिहासस्तु वैदिककालात् प्रारभ्य सुदीर्घकालव्यापकः।

१. एवमेव। अध्ययनक्षेत्रस्य मम विपुलविस्तरस्तु कालेन देशेन च सिद्धः।

३. भवत्याः प्रयाससाफल्य-कामा वयम्।

१. अनुगृहीताऽस्मि। किन्तु अस्माकं गम्भीर-वार्तालापेन सभा इयं श्रान्ता इव प्रतिभाति।

२. एवमेव। तर्हिं श्रमापनोदनाय अपरं किमपि गानादिकं भवतु नाम।

सर्वे—तदेव भवतु, तदेव भवतु।

## (४) अनुसन्धान-कार्य-परिचयः

१. अहो! धन्योऽयं कालः। एकवर्षानन्तरं पुनरेकवारम् अस्मिन् रङ्गे सम्मिलिता वयम्।

२. किन्त्वत्रान्तरे बहूनि परिवर्तनानि घटितानि अस्माकं शोधकक्षे।

४. तानि तु घटितान्येव। **स्वामिनिजबोधम**हाभागाः सेवातः अवकाशं लब्ध्वा साधनारताः; **शृङ्गिमहोदया**स्तु विश्वविद्यालयानुदानायोगस्य विशिष्टयोजनायां संलग्नाः, तत्पदं च **गिरिम**होदया अलंकुर्वन्ति।

३. एवमेव।

१. सत्यम्। किन्तु एता घटनाः अस्यै सभायै कथं रुचिकरा भवेयुः?

३. युक्तमुक्तं भवद्भिः।

४. तर्हि सदोरञ्जनाय किं कर्तव्यम्?

१. सदसो रञ्जनं स्याद् वा न वा, किन्तु शोधकक्षेऽस्मिन् किं किं कार्यं सम्पद्यते, तस्य स्वल्पोऽपि परिचयः अत्रोपस्थितानां समेषां कुतूहल-निवारणाय प्रभविष्यति।

२. तदेव भवतु, नाम।

१. अत्रभवानेव शुभारम्भं विदधातु।

२. बाढम्। अप्रकाशित-संगीत-ग्रन्थानां मूलप्रतीनां प्रतिलिपीनां वा संग्रहः, तेषा विषयवस्तुविश्लेषणं च इति प्रथमम् अङ्गम् अत्रत्यस्य कार्यसमूहस्य।

१. एवमेव। तत्र विषयवस्तुविश्लेषणे प्रकाशितग्रन्थाः अपि समाविष्टाः। विश्लेषणस्य मुख्यप्रकारस्तु शब्दसूचीनिर्माणम्।

४. भरत-नाट्यशास्त्रस्य समग्रा शब्द-सूची निर्मिताऽस्माभिः।

२. अत्राधुनिकग्रन्था अपि न अनाद्रियन्ते। भातखण्डे-महोदयस्य हिन्दुस्तानीसंगीतपद्धतेरपि शब्दसूची प्रस्तुता।

३. अत्रभवान् विश्वविद्यालयानुदानायोगस्य योजनायां कस्मिन् कर्मणि रताः? (श्रृंगिमहोदयं निर्दिश्य) इति श्रोतुं लालायितं मे मनः।

१. अहो अन्यत्कार्यविवरणस्य पूर्णतायाम् असम्पन्नायामेव अयं प्रश्नः उपस्थापितो भवद्भिः।

४. किं तत्रानौचित्यम्?

३. विश्वविद्यालयानुदानायोगस्य योजनान्तर्गतं कार्यं तु शोधकक्षस्यास्य गरिमवर्धनायैव प्रभवितुमर्हति।

२. सुष्ठु! तर्हि कथयामि संक्षेपेण। संगीतरत्नाकरस्य आंग्लभाषायामनुवादपरमिदं कार्यम्।

३. एवम्।

१. केवलम् अनुवादमात्रमांग्लभाषाविदां बोधाय अलंभविष्यति वा न वेत्यत्र शङ्कितं मे चित्तम्।

२. अर्थावबोधाय तु सुविपुलाः टिप्पण्यः, व्याख्यापरा टीका च आंग्लभाषायामेव निवेश्यन्ते।

३. आम्।

४. (भट्टमहोदयम् प्रति अवलोक्य) संगीतविषयाणां प्रकाशिताऽप्रकाशित-संस्कृतग्रन्थानां या बृहती सूची भवद्भिर्निर्मिता सा तु विस्मृतैव।

१. न ह्यत्रैकैकस्य कार्यस्य वर्णनं प्रतिज्ञातम्। द्वित्राणि उदाहरणानि एव बुधजनानां दिक् सूचने समर्थानि।

२. सत्यम्। किन्तु अत्र सम्पन्नस्य, सम्पद्यमानस्य, सम्पत्स्यमानस्य च कार्यकलापस्य का उपयोगिता इति विषये किञ्चिदवश्यं वक्तव्यम्।

३. इदं हि अति सुन्दरं प्रतिभाति मे।

१. भारतीयसंगीतशास्त्रे अनुसन्धानकर्मणः प्रस्तावनस्वरूपमिदं सर्वम्। गम्भीरानुसन्धानार्थं सहायिका सामग्री प्रस्तूयते अनेन।

२. सा च प्रस्तूयते एव। अत्रत्यविभागस्थाः शोधच्छात्राः, देशान्तरादागता अनुसन्धित्सवश्च अनया सामग्र्या उपक्रियन्ते इति स्वानुभवेन जानीमहे।

४. सुष्ठु भणितं भवद्भिः। किन्तु अधुना भाविकार्यक्रमाय अवकाशो देय इति मन्ये, यतो हि विपुलकार्यभरावनतः अस्माकं श्रोतृसमाजः।

५. सर्वे—अवश्यं देयः अवकाशः।

## (५) नैराश्य-परिहारः

१. हा धिक्! किं करोमि? क्व यामि? का मे गतिः? ............ खण्डितः पाठोऽध्येयग्रन्थानां, दुरूहं तात्पर्यम्, लुप्तप्राया च लक्ष्येण सह सङ्गतिः। एतेषामध्ययने मस्तकभञ्जनं विहाय यदि गानस्याभ्यासमात्रम् अकरिष्यम्, अद्य प्रभृत्यपि कुर्यां वा, तर्हि प्रमोदावहं साफल्यं, लोकरञ्जनं, कीर्त्तिः, अर्थलाभः—सर्वमेव अञ्जसा करतलगतं स्यात्। किन्तु ............ प्रारब्धयोगेन निपतिताऽस्मि घोरेऽस्मिन् दुस्तरसागरे। 'इतो नष्टस्ततो भ्रष्टः'—इत्येव मे शोचनीया दशा। कं पृच्छामि? कं वा शरणं गच्छामि? को वा ममावस्थाम् अवगमिष्यति?

(प्रविशन्तं कमपि महापुरुषं साश्चर्यं पश्यति)

२. वत्से! उद्विग्नाऽसि?

१. (ससम्भ्रमम्) आर्य! को भवान् ऋषिकल्पः। वात्सल्यं स्रवन्निव, ज्ञानगौरवं व्यञ्जयन्निव, सौम्यत्वालोकं विकीर्णयन्निव, सुधावर्षिण्या गिरा कर्णकुहरमापूरयन्निव, गाम्भीर्यस्य सीमेव, आचार्य-पदस्य महिमेव, दर्शनमात्रेण हृदयम् आह्लादयन्निव, ममाकुलताहरणाय अवतीर्णो देवतात्मा इव प्रतिभाति? आत्मपरिचयज्ञापनाय प्रसीदतु मयि भवान्।

२. बालिके! येषां नाम-जन्म-कर्म-देशादिपरिचयः आकलनयोग्यतामीत्य स्थितः, येषां च कुलादिगतविशेषम् आगमसम्प्रदायधारायामेव विलीनं, तेषामेव विगलिताशेष-विशेषाणां, प्रज्ञामात्रशरीरिणां, प्रतिभामात्रोपजीविनाम् अन्यतमोऽहम् एतावन्मात्रमलं ममात्मपरिचयख्यापनाय।

१. प्रणताऽस्मि आर्य! प्रथमदर्शने सम्भ्रमवशेन मूढमतेर्मम प्रणतिनिवेदने त्रुटिर्जाता। तत् क्षम्यताम्।

२. वत्से! बालानामपराधे दृष्टिनिक्षेपाद् विरता एव गुरुजनाः। आचार-दोषस्य ग्लानिं विहाय तव क्लेशस्य कारणमेव कथय सद्यः।

१. हा कष्टम्! आर्य! घोरे कर्मणि नियोजिताऽस्मि दैवदुर्विपाकेन।

२. किं तत्?

१. भरतमुनेर्गान्धर्व-प्रतिपादनमधिकृत्य पीएच० डी० त्युपाधिकृते शोध-प्रबन्धलेखने प्रवृत्ताऽहम्।

२. तत्तु परमसन्तोषावहम्। तत्र कष्टस्य का कथा?

१. आर्य! अभिनवगुप्तपादानां विवृतिं विना भरतनाट्यशास्त्रमतीव दुर्बोधम्। विवृतिश्च पाठभ्रंशेन दुरूहा।

२. एवम्? यदि सम्यक्पाठोद्धारार्थम् अप्राप्या सामग्री, तर्हि यावानेव पाठ उपलभ्यते तावतैव कार्यनिर्वाहः साधयितव्यः। 'सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः' इति न्यायेन।

१. किन्तु, तत्र गुरुतरः परिश्रमोऽपेक्षितः। तस्माच्च बिभेमि।

२. अयि मुग्धे! कृतपरिश्रमाणामेव शास्त्रमर्मावबोधो जायते, इति कथं विस्मृतं त्वया!

१. परिश्रमे कृतेऽपि तेन किं सेत्स्यते, सिद्धेऽपि यत्किञ्चिदर्थे को वा तस्य महिमानं ज्ञास्यति इत्यत्र भ्रान्ता मे मतिः।

२. 'बुद्धिनाशात् प्रणश्यति' इति गीतावचनं स्मारं स्मारं व्यवसायात्मिका बुद्धिरेव साधनीयाऽऽदौ।

१. तां तु कुत्र लभेय आर्य! न हि सा आपणे विक्रीयते।

२. बाढम्। स्वधर्मप्रत्यय एव तस्या जन्मस्थानम्। युक्तायुक्तविवेक एव तत्र क्रययोग्यता, अध्यवसाय एव तत्र मूल्यम्।

१. सत्यं कथयत्यार्यः। स्वधर्मस्य निर्णये जाते तु बुद्धिनाशस्य आशङ्काऽपि सुदूरपराहता स्यात्। किन्तु को मे स्वधर्मः?

२. संस्कृतभाषा यया अधीता, गान-कौशलमपि ययाऽर्जितं तस्याः स्वधर्मस्तु हस्तामलकवत् सुस्पष्ट एव।

१. एवमार्य ?

२. अथ किम् ? शास्त्रगतार्थानां सम्यगवबोध एव साधनमृष्यृणान्मुक्तेः । तत्रार्जिताधिकाराणां स्वधर्मस्तन्मुक्तिसाधनमेव।

१. सुदुष्करेऽस्मिन् कर्मणि कथमुत्सहे आर्य! उपयुक्तं सम्बलं विना ?

२. किं ते गुरवो नो समर्था सम्यगावलम्बनप्रदाने ?

१. सामर्थ्ये तु नहि संशयावकाशः, किन्तु कर्मबाहुल्येन अस्माकमाचार्या स्वल्पकालपर्यन्तमेव प्रतिदिनमध्यापनार्थमवकाशं लभते। विपुलो हि शास्त्रवारिधिः, मितो हि आचार्यसकाशाद् अध्ययनस्य कालः । कथं पारं गमिष्यामीति विचिन्त्य आकुलमतिरहम्।

२. आचार्यस्य कर्म तु चक्षुरुन्मीलनमेव। नहि करं गृहींत्वा नयनानयनम्। उन्मीलितदृष्टिना जिज्ञासुना स्वयमेव पुष्पफलाहरणार्थं शास्त्रोपवने सञ्चरितव्यम्।

१. सम्यग्भणितमार्येण। परावलम्बनं विहाय स्वावलम्बनसाधने प्रवृत्ता भविष्यामि। किन्तु ............ सङ्गीतशास्त्रविभागाद् बहिः सामान्यलोके नहि कोऽपि गवेषणकर्मण्यस्मिन् प्रेरयति अस्मान्। उत्साहवैरल्येन मन्दोद्यमाऽहमार्य!

२. लोकात् प्रोत्साहनस्याशैव त्याज्या। किं न जानासि यन्महर्षिर्व्यासोऽपि लोकगतिं दृष्टा अन्वशोचत्—

**ऊर्ध्वबाहुर्विरौम्येष नहि कश्चिच्छृणोति मे।**

लोकस्य गतिस्तु सत्कर्मण्यध्यवसायवतां कदाऽपि अनुकूलाऽऽसीत्, भविष्यति वा इति वक्तुं न शक्यते। तस्मात् हृदयदौर्बल्यं त्यक्त्वा स्वधर्मपालनमेव श्रेयः ।

१. अर्जुनमनुसृत्य "नष्टो मोहः स्मृतिर्लब्धा" इति वचने प्रवृत्ताऽपि स्वकीय-गानकौशलस्य रक्षार्थमार्यस्यानुज्ञां विना पश्चात्पदामेव अनुभवाम्यात्मानम्।

२. अनुज्ञा तु स्वतःसिद्धा। शास्त्राध्ययनं हि गानकौशलस्य साधकमेव, नहि बाधकम्।

१. यद्येवमाश्वासयत्यार्यः तर्हि नितरां धन्याऽस्मि भवतो दर्शनलाभेन।

२. वास्तविको जिज्ञासुर्नहि मार्गभ्रंशमर्हतीति भगवतः प्रतिज्ञैवात्र कारणं तव नैराश्यपरिहारे। अर्जुनविषादयोगस्यापि स्वधर्मपरिनिष्ठयैवोपसंहारो विश्वविश्रुतः। उत्तिष्ठत, जाग्रत, प्राप्य वरान्निबोधत।

१. करिष्ये वचनं तवार्य! (प्रणमति) (महापुरुषं निर्गच्छन्तं सानन्दास्रं विलोकयति)

## ( ६ ) पारिभाषिक-शब्द-विमर्शः

१. अहो! नितरां सुभगा इयं गोष्ठी। धन्या ह्यस्माकं भगिनी इन्द्राणी देवी तिष्ठत्यत्र।

२. किं भो! धन्यतायाः किमत्र कारणम् ?

१. किं न जानासि अङ्ग! यद् भगिनीयं स्वकीयं शोधप्रबन्धं सुष्ठु समाप्य प्रस्तुतवती मासचतुष्टयपूर्वम्। सुभद्रादेव्याः पथानुसारिणीयम्।

३. ओम्। ज्ञातम्! शोधसागरे निमग्नानाम् उन्मज्जननिमज्जनवशात्कण्ठागतप्राणानां तु शोधप्रबन्धसमापनमेव सौभाग्यस्य परमोत्कर्ष इव प्रतीयते।

४. हले! भुक्तभोगिन एवात्र प्रमाणम्। त्वं तु Diploma in-Music Appreciation—पाठयक्रमे संगीतश्रवणकौशलसम्पादन एव कृत-कृत्यताम् अनुभवन्ती कथं ज्ञास्यसि शोधरतानां दुर्भरोद्वेगम् ?

५. अलमत्र विवादेन। कश्चित् चेतःश्रवणमङ्गलः संवाद एव प्रचलतु। नो चेत् समवेताः सामाजिका अत्र किं भावयिष्यन्ति?

१. सत्यं कथयति भगिनी। मिथोऽस्माकं संवादोऽस्तु, गम्भीरशास्त्रवचनानामनुवादोऽस्तु नः सम्भाषणे।

२. संवादार्थं तु प्रथमं वादोऽपेक्षितः।

३. भवानेवात्र वादी भवतु नाम।

४. आः, त्वमपि प्रगल्भेव जल्पसि?

५. इयमवहेलापात्रमिति कथं मन्यते त्वया? डिप्लोमा-पाठयक्रमेऽपि संगीतशास्त्रस्य मूलभूतविषयाणां परिचयस्तु जायत एव।

१. नूनमियं लघुभगिन्यपि संवादेऽस्मिन् भागधेयस्याधिकारिणी भवितुमर्हति।

२. अलमतिप्रसङ्गेन। अधुना इन्द्राणीदेव्याः समक्षं कतिपयप्रश्ना निवेदनीया अस्माभिः।

३. ''तद् विद्धि प्रणिपातेन, परिप्रश्नेन, सेवया।'' तदत्र प्रणिपातं, सेवां च विहाय, परिप्रश्न एव श्रेयान् अस्माकं कृते।

४. चपलाऽसि खलु मुग्धे।

५. दुग्धमुग्धाननेयं क्षन्तव्या।

१. एकः प्रश्नस्तु मम चेतः समुद्वेलयति। तन्निवेदने भवत्या अनुज्ञा वर्तते वा न वा।

५. बाढम्। कथय निर्भयम्।

१. सम्पन्नशोधप्रबन्धा भवती कृतार्थमात्मानं मन्यते वा न वा।

५. साधु पृष्टम्। कृतार्थतायास्तु नास्ति काऽपि कथा। जीवनव्यापि हि अनुसन्धानकर्म। शोधप्रबन्धलेखनं तु तत्र दीक्षास्थानीयमेव। वास्तविकं शोधकर्म तु तदनन्तरमेव प्रारभ्यते।

२. अहो! अनुसरणीया भवत्या ज्ञाननिष्ठा।

४. कुत्र लब्धेयं भवत्या?

५. पीएच० डीत्युपाधिं प्रति लौल्यं विहाय सत्यानुसन्धाने दृढमतिरनायासमेव उद्भूता अस्मिन् संगीतशास्त्र-विभागे कार्यारम्भानन्तरम्। सत्यस्यानन्तविस्तरः क्षितिज इव यदा दृष्टिपथम् आक्रामति तदा शोध-प्रबन्धलेखनस्य लघुताया बोधः सहजां विनम्रतां जनयति।

४. बहु शोभनम्! अस्माकं कृते भवत्याः कोऽपि निर्देशो यदि स्यात् तर्हि तस्य ख्यापनरूपोऽनुग्रहो विधातव्यः।

५. साधु उक्तम्। नितरां तुष्टाऽस्मि युष्माकं जिज्ञासां दृष्ट्वा। एक एव निर्देशो यदि अपेक्षितः तर्हि पारिभाषिकशब्दानाम् अर्थविकासस्ये-तिहासं प्रति ध्रुवा दृष्टिः अनुसन्धित्सुभिः आधेया इत्येव वक्तुमिच्छामि।

२. कतिपयैरुदाहरणैर्यदि स्वीयमभिप्रायं स्पष्टीकरोतु भवती, तर्हि उपकृताः स्याम।

५. बाढम्। अधिकारि-श्रोतृसमुदाये स्वीयाभिप्रायनिवेदनं तु परमसुखावहम्।

३. अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख, मा लिख मा लिखेति प्रसिद्धा सूक्तिः।

५. एवमेव। त्रीण्युदाहरणान्यत्र सद्यो मनसि आगच्छन्ति।

१. श्रवणोत्सुका वयम्।

५. स्वरशब्दस्तानशब्दः श्रुतिशब्दश्च। प्रथमं स्वरशब्दमधिकृत्य किञ्चित् कथयामि।

3. सर्वपरिचितोऽयं शब्दः।

पुत्रावुभौ कवलितौ विकरालकाल-
व्यालेन शैशववयस्यभिरामरूपौ।
जाता चिराय मुदिता तनयाऽत्युदारा
विद्याकलोल्लसितप्रेमलताभिधाना[१] ॥ ६ ॥

कारुण्यप्रतिमूर्त्ति-मातृजठराज्जाता द्विजेन्द्रान्वये
वात्सल्यप्रतिमः पिता प्रतिदिनं स्नेहामृतं वर्षति।
पित्रोः प्रीतिमुपेयुषी मधुमयीं वाचं वदन्ती मुदा
[२]सुस्पष्टां निजशैशवीं व्यपनयत् प्रीतामवस्थां स्थिराम् ॥ ७ ॥

जालन्धरान्तर्गतस्य नकोदरस्य
भूमिर्यदीयजनुषा भृशमुल्ललास।
बाल्ये वयस्यनुबभूव महानगर्यां
रूपं नवीनतममानवसभ्यतायाः ॥ ८ ॥

दिल्ल्यामथ मुम्बय्यां कलिकातायां महानगर्याञ्च।
बाल्यं ह्यस्या विगतं विज्ञातञ्चाधुनातनं वृत्तम् ॥ ९ ॥

सा चैकादशवार्षिके वयसि सद्बुद्ध्याः प्रकर्षात् परम्—
आद्यां 'मैट्रिक'-नामिकामुदतरत् क्लिष्टां परीक्षां मुदा।
इन्द्रप्रस्थ-यशस्यशस्य-सुमहा-विद्यालयेऽधीतिनी
कक्षां स्नातक-नामिकामपि समुत्तीर्णाऽल्पकालेन सा[३] ॥ १० ॥

दिल्यामेव वसन् पिता स्वतनयानैसर्गिकीमर्हतां
पश्यन् गायन-वाद्य-नृत्य-विषयेऽप्युत्साहयन् बोधने।
चित्राणामथ निर्मितौ नवनवां श्लाघ्यां कलां शिक्षितुम्
अर्हान् योग्यतमान् सुशिक्षकवरान् संयोजितुं द्राक् क्षमः ॥ ११ ॥

शर्मा श्रीलालचन्द्रः शुचिरुचिरुचिरो देशभक्तो जितात्मा
कर्मण्यः 'मोहनस्य' प्रगुणितमहिमोत्कर्षभाज्यङ्घ्रिपद्मे।
सत्याहिंसानुरागे निरततममतिव्यापृते नेतृमान्ये
श्रद्धालुस्तत्प्रबोधे निरतिशयसुखं मन्यमानोऽनुमेने ॥ १२ ॥

यद्यद् गाँधिमहात्मना निजमनःशुद्ध्यै व्रतं स्वीकृतं
तद् तद् पालितवानयं नयविदां नीत्यां मुदा दीक्षितः।
सत्यं सद्ब्रह्मचर्यं सकलजनमनोमोदनं चाप्यहिंसा—
दीक्षायां रक्तचित्तं सततमभिमतं स्वं मतं व्याजहार ॥ १३ ॥

---

१- दो भाई उत्पन्न हुए थे—एक पहले, एक बाद में, मध्य में यह कन्या थी, किन्तु दोनों शैशव (डेढ़ वर्ष, दस मास) में ही न रहे।
२- यह कन्या नौ मास की होते ही बोलने लगी थी और तब से ही कभी तुतलाई नहीं—आरम्भ से ही स्पष्ट शुद्ध उच्चारण रहा।
३- ग्यारहवें वर्ष में दसवीं उत्तीर्ण की, तेरहवें में इण्टर, तथा पन्द्रहवें में बी०ए० उत्तीर्ण हो गयी।

योऽभूद् राष्ट्रपिता स एव नितरां क्रूरात्मना घातितः
तस्मिन् हन्त दिवंगतेऽथ तनयाचारं चिरं पालयन्।
शश्वद् भूशयनं चकार जगृहे यः कम्बलं स्वासनं
नैवात्मीयगृहे, पुनर्न कृतवान्नत्युत्सवायोजनम्॥ १४॥

यश्चाध्यापितवान् सुतां प्रतिदिनं प्रेम्णाऽऽङ्ग्लभाषां भृशं
कौशल्यं सुदृढीचकार विदुषां सङ्गेऽपि सम्भाषितुम्।
शुद्धां लेखननैपुणीं निहितवाँश्चित्ते तदीयेऽद्भुतां
गेहे किन्तु सदा स्वमातृवचसो व्याहारमाकारयत्[१]॥ १५॥

नेतॄणामभिभाषणेषु विदुषां शास्त्रीयचर्चास्वपि
प्रायः सम्मिलितुं सुतां सहचरीं नेतुं सदोत्साहवान्।
शिक्षायाः परिपूर्त्तये समुचिताचार्यान् गृहैवानयत्
विद्यायां विलसत्कलासु च सदा योगं व्यवस्थापयत्॥ १६॥

विद्याकलापरिणतिं परिभाव्य चित्ते,
माता-पिता च तनया मथुरामुपेताः।
गौडीयवैष्णवसनातननीतिरीतिं
सम्यग्-विबोद्धुमिव तत्र मुदं प्रपन्नाः॥ १७॥

''चैतन्य''-सम्मत-मतप्रतिपादकानि
सत्पुस्तकानि विधिवत् प्रतिपत्तुकामाः।
सत्सङ्ग-सम्भृत-हरिस्मरणे प्रभूतं
पीयूषपूरमनिशं मधुरं धयन्ति॥ १८॥

अस्मिन् क्रमे विविधतीर्थवरेषु गत्वा
पूजाविधौ निरुपमाशनसुप्रसादम्।
सुस्वादुवस्तुपरिपाककलासु दीक्षां
लब्ध्वा भृशं मुमुदिरे परितोषवन्तः॥ १९॥

सुस्वादुभोजनविनिर्मितिदक्षतायां
प्राथम्यमापदतितीव्रमतिप्रकर्षात्।
रत्याऽऽकलय्य गृहकर्मणि कौशलस्य
सन्धानसौरभसमृद्धिमुररीचकार[२]॥ २०॥

---

१- पू० पिताजी स्वयं अनेक भाषायें जानते थे, अंग्रेजी पर अद्भुत प्रभुत्व था, वह पूरी तरह बहिनजी में आया था, और अभिव्यक्ति की विशदता-सम्प्रेषणीयता हिन्दी-अङ्ग्रेजी में समान स्तर पर थी, बङ्गाली-गुजराती-मराठी-ओड़िया-असमी-व्रजभाषा-उर्दू-भोजपुरी-सब में निपुणता थी, फिर भी पिताजी का आग्रह रहता था कि घर में परस्पर अपनी मातृभाषा पंजाबी ही बोली जाय, ताकि वह पीछे न छूट जाय। पंजाबी के भी अनेकों **प्राचीन परम्परागत गीत** वे गाया करती थीं जो उनके साथ ही लुप्त हो गये, अब पंजाब में भी उपलब्ध नहीं हैं।—सम्पा०

२- श्री गौड़ीयमठ की सेवा में रहते समय भगवान् के नैवेद्य के लिए विविध प्रकार के सुस्वादु पकवान, अचार, मुरब्बे, शर्बत, पापड़ वड़ी आदि सभी प्रकार की भोज्य वस्तुयें और श्री विग्रहों के परिधान सीने, पिरोने-बुनाई-क्रोशिया आदि में भी बहिनजी सिद्धहस्त हो गईं, जो निपुणता आजीवन बनी रही, यहाँ तक कि अपनी विदेशयात्राओं में भी इससे सबको आनन्द देती रही। —सम्पा०

एतेषु भक्तजनमानसपावनेषु
सञ्जातजीवितसुधारसलाभलुब्ध्या।
सप्ताब्दिकोऽवधिरगात् क्षणमात्रकल्पः
कालः पुनर्गतिमधात् परिवर्तनीयाम्॥ २१॥

एवंविधेऽपि विषये निजतीक्ष्णबुद्धेः
सिद्धिं प्रदर्श्य चकिताँश्च गुरून् विधाय।
भक्तिप्रवाहपतितान् निजमातृ-पितृ—
वाञ्छां प्रपत्तिरसिकामकरोत् प्रकृत्या॥ २२॥

एवं क्रमे प्रचलिते मनसो निरोधं
कृत्वा सुचिन्तनमयी जननी सुतायाः।
कल्याणमाप्तुमवशिष्ट-विशिष्ट-
—विद्या-सम्पूर्त्तये स्वदयितं भृशमैरयत् सा॥ २३॥

तत्प्रेरणा-परवशो जनकः निसर्गात्
कन्याहिताय सततं हृदि जागरूकः।
नीत्वा सुतां पिपठिषापरिपूर्तिकामः
काश्यां समागमदनुग्रहमूर्त्तिरेषः॥ २४॥

मध्ये विरामवशतोऽध्ययनक्रमस्य
कुण्ठां समापयितुमुद्यमशालिनीयम्।
स्वल्पश्रमैः कतिपयैर्दिवसैश्च भूयः
सुप्तामिव स्वप्रतिभां विदधे प्रबुद्धाम्॥ २५॥

काश्यामत्र यदोच्चशिक्षणविधेर्निर्वर्तने व्यापृता,
चित्तेनास तदैव दैववशतः सङ्गीतशाला नवा।
सञ्जाता त्वविगीतगीतमहितान् ओङ्कारनाथाभिधान्
प्राचार्यान् प्रतिपद्य विज्ञपरिषत्स्वामन्त्रयत् तान् गुरून्॥ २६॥

सा हिन्दीं सुरभारतीं च युगपत् संसेव्यामानाऽऽदरात्
आचार्यान् उपलभ्य[1] वैद्यविबुधाधीशान् प्रशस्याशयान्।
श्रीमन्तं च यशस्विनं सुमनसं ख्यातं द्विवेदिद्विजम्[2]
सम्प्राप्यार्चनतत्पराऽर्जितवती पूर्णार्हतामुत्तमाम्॥ २७॥

साहित्ये विषये प्रविश्य विधिवत् शिक्षा-परीक्षाक्रमैर्
भूयो ज्ञातुमियेष काव्यनिगमाम्भोधेस्तु गम्भीरताम्।
वैदुष्येऽप्रतिमान् सुधीन्द्रतिलकैरभ्यर्हितान् विश्रुतान्
पूज्यान् सद्गुरुदेववन्द्यसुकवीन्[3] भक्त्या सिषेवे गुरून्॥ २८॥

---

१- परमविद्वदग्रणी डॉ० **परशुराम लक्ष्मण वैद्य**, इनसे ही संस्कृत-ग्रन्थों के पाठ-संशोधन-सम्पादनादि की शिक्षा-दीक्षा पाई।

२- **आचार्य हजारी प्रसाद द्विवेदी** (हिन्दी-संस्कृत वाङ्मय-रस के समन्वयाचार्य)

३- महामहोपाध्याय सर्वतन्त्रस्वतन्त्र पण्डित **श्री महादेव शास्त्री**, ये ही फिर संन्यस्त हो कर काशीस्थ सुमेरुपीठ के शङ्कराचार्य महेश्वरानन्द सरस्वती हुए।

यो दर्शनेषु सकलेषु समानमानस्-
तन्त्रे स्वतन्त्रधिषणोऽखिलपाणिनीये।
काव्यागमे च कविकर्मणि लब्धसिद्धिः
प्राध्यापने प्रथितकीर्तिरभूत् प्रधानः॥ २९॥

तस्मिन् दृढे परिवृढे सति विद्यमाने
प्रौढिं गतेऽत्र विषयाध्ययनावबोधे।
साहित्यसौरभमितः प्रसृतं जगत्याः
सर्वासु दिक्षु मलयाञ्चलमारुतेऽस्मिन्॥ ३०॥

साहित्यशास्त्रविषये वितताववबोधो
निर्दोषशोधविषयेऽपि कृताधिकारः।
प्राध्यापने सुरुचिरे रचनाप्रपञ्चे
चिन्तामणिः प्रपठतामिह राममूर्त्तिः[१]॥ ३१॥

एभ्यो गुरुभ्य उपलभ्य विशिष्टबोधं
साहित्यिकं परममङ्गलमूलमूल्यम्।
विद्याऽनवद्यगुणदोषविचारचारून्
ग्रन्थानतीव जटिलानपि चाध्यगीष्ट॥ ३२॥

बाल्ये या गृह एव शिक्षितवती सङ्गीतमारम्भकं
लोके नूतनवस्तुबोधविषये जागर्ति यस्या रुचिः।
पूर्वाभ्यासवशाद् सदा श्रुतियुतं गीतं प्रियं गायति
सैवाऽनल्पकलासु सिद्धिमयते निर्बाधबोधेच्छया॥ ३३॥

भूयो ज्ञातुमियेष काव्यनिगमाम्भोधेरगाधात्मतां
साहित्ये विषये प्रविश्य विधिवत् कक्षा-परीक्षाक्रमे।
वैदुष्येऽप्रतिमान् सुधीन्द्रतिलकैरभ्यर्हितान् विश्रुतान्
पूज्याचार्यपरम्परासु महितान् सद्देशिकानाश्रयत्॥ ३४॥

नानाशास्त्रकलादिषून्नततमां शिक्षां परीक्षां तथा
साफल्यातिशयात् प्रपूर्य विधिवत् प्राप प्रतिष्ठां पराम्।
सम्यग् भूरिपरिश्रमेण नितरामन्वेषणोपाधिना
धन्यौचित्यसमर्चिता समभवद् विद्वद्भिरप्यादृता॥ ३५॥

स्वाध्यायेन सदार्चिताः स्वगुरवः, प्रीताः सतीर्थ्याः कृताः,
सामोदाः सुहृदस्तथा सहचरा निर्मत्सरा बान्धवाः।
चारित्र्येण सुचारुणा सुमनसः, स्नेहेन सम्भाविताः
सौम्याः शीलसमन्विताः स्वरुचिराचारेण शुद्धाशयाः॥ ३६॥

---

१- **पं० राममूर्ति त्रिपाठी** ने साहित्याचार्य करते समय बहिनजी को रसगङ्गाधर एवं अन्य कुछ काव्यशास्त्रग्रन्थ पढ़ाये, सतत सम्पर्क बना रहा।

याऽवेदीत् सुरभारतीमसुलभां व्युत्पत्तिसम्पद्वृतां
पूर्णामाङ्गलगिरं करे कृतवती सम्भाषणे लेखने।
प्रान्तीयाभिरनल्पभूतिविलसद्भाषाभिरभ्यर्हितां
हिन्दीं राष्ट्रगिरं बुबोध युगपद् व्याहर्त्तुमीष्टेऽनिशम्॥ ३७॥

स्तनेनैकेनैव स्फुरति सुषमा यन्न युवतेस्-
तथैकं साहित्यं प्रथयति मुदं नो रसवताम्।
अथ स्यात् साहित्यं सरसमिह सङ्गीतमिलितं*
विदग्धानां स्वान्तं प्रमदयति लोके सुमनसाम्॥ ३८॥

यथा प्रख्यातेभ्यः प्रथमगुरुदेवेभ्य उदितं
विशुद्धं सज्ज्ञानं सपदि हृदयेनाप मुदिता।
तथा सङ्गीतेऽपि प्रथितयशसष् ठाकुरगुरोर्
अधीतं निर्दोषं हृदि विनिहितं शास्त्रहृदयम्॥ ३९॥

आम्नायाध्ययने यथा निपुणतां प्राप्तुं गुरोरन्तिके
छायेवानुवसन् वटुः पटुतमः सञ्जायतेऽभ्यासतः।
सङ्गीतेऽपि तथैव सन्निधिवशाज् ज्ञानं प्रभाभासुरं
सम्प्राप्तुं प्रथते श्रयन् गुरुवरं शस्योऽथ शिष्यो भवेत्॥ ४०॥

अस्मिन्नेव चिरन्तनक्रमविधौ मेधावि-विद्यार्थिभिः
साकं शास्त्ररहस्यबोधमनिशं सम्बोधयन् यत्नतः।
आचार्योऽधिकरोति शास्त्रजटिलग्रन्थिश्लथीकारिणीं
रीतिं तत्त्वविदां पुरः प्रकटयँस्तत्त्वं परं दुर्गमम्॥ ४१॥

बाल्यादेव सरस्वतीमनुपदं सञ्चिन्तयन्ती हृदा
प्रीताऽऽचार्यपदाम्बुजस्य रजसा स्नान्ती मतिप्रीतये।
ध्यायन्ती गुरुदेवतां स्वमनसो निःशेषयन्ती रुजं
हेम्नः कान्तिमवाप साऽनलगता दोषानपाकुर्वती॥ ४२॥

या पित्रोः परिचर्यया सुमनसां सम्मानदानव्रतैर्
आचार्यार्चनदीक्षया समुचिताचारैः पवित्राशया।
मित्राणामपि निर्व्यलीकविधिना कल्याणमातन्वती
श्रेयांसि प्रथयन्त्युदारहृदया कामं चिरं नन्दिता॥ ४३॥

सङ्गीतेऽर्जितकीर्त्तयोऽपि रसिकैः कामं समभ्यर्चिताः
लोकानां विमले बृहत्परिसरे सर्वत्र सम्भाविताः।
येऽभिज्ञाः कलकण्ठकण्ठकुहरान्निःष्यन्दमानध्वनिं
कण्ठेनैव जयन्ति कुण्ठिततमास्ते शास्त्रतत्त्वोद्गमे॥ ४४॥

---

* "सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम्। एकमापातमधुरं द्वितीयं लोचनामृतम्॥"—प्रसिद्ध उक्ति।

साहित्ये सुरवाचि विस्तृततमे नाट्येऽथ सङ्गीतके
सम्प्राप्तप्रतिपत्तिरर्जितयशोराशिर्भृशं श्लाघिता।
विश्वस्मिन् विबुधादृता मतिमतां साहित्यसङ्गीतयोः
सामानाधिकरण्यमद्भुततमं प्राप्य प्रशंसार्जिता ॥ ४५ ॥

या विद्यार्थिगणेऽग्रगण्यधिषणा शास्त्रान्तरेऽप्यर्हताम्
आसाद्यातितरां सदैव गुरवे साहाय्यमापादयत्।
आचार्यैर्भरतैर्विनिर्मिततमे नाट्येऽथ तत्राद्भुते
प्रख्यातेऽभिनवप्रणीतजटिलव्याख्यानके सङ्गता॥ ४६ ॥

यः सङ्गीतकलासु पूजितपदो यो विश्वविद्यालये
सङ्गीताध्ययनाय पाठ्यरचनाऽऽरम्भेण निष्णाततताम्।
आनेतुं पठतां कुलं क्रमवशाद् ग्रन्थाँस्तथैवोत्तमान्
प्राचार्यो रचयाञ्चकार विविधान् ओङ्कारनाथो गुरुः॥ ४७॥

एतस्मिन्नतिनूतनेऽपि विषये नाट्यागमाध्यापन-
व्यापारे गुरुकार्यपूर्तिकरणं साह्यं सदाऽऽपादयत्।
याऽनेकासु च भारतीषु विधिवत् सद्ग्रन्थसम्पादने
साहाय्यं ददती प्रणम्यगुरवे प्रादान्नवां दक्षिणाम्॥ ४८॥

पाठ्यग्रन्थविनिर्मितौ नवनवाध्यायस्य संयोजने,
पौर्वापर्यविनिर्णयेऽथ कृतिनां सन्तोषसम्पादने।
शश्वत्तत्त्वविचारणे, सुमनसामाह्लादने, कर्मणा
शर्माणि प्रथयन्त्यनर्घमहिमा प्राप्तो यया मेधया॥ ४९॥

या विद्यार्थिगणेऽग्रगण्यधिषणा शास्त्रान्तरेऽप्यर्हताम्
आसाद्यातितरां सदैव गुरवे साहाय्यमापादयत्।
आचार्यैर्भरतैर्विनिर्मिततमे नाट्यागमेऽप्यद्वयां
प्रख्याताभिनवप्रणीतजटिलव्याख्या-समाख्याऽतुला॥ ५०॥

नित्यं दुष्करकर्ममर्म विधिना विज्ञाय विद्यावतां
साहित्येन सुचर्चयाऽनुदिवसं वादेन बोधेन च।
अक्षुण्णेन पथा चलन्नपि गुरुर्मेधावि-विद्यार्थिभिः
साकं प्राप्यमनुत्तमं पदमनायासेन प्रापन् मुदा॥ ५१॥

सङ्गीतेऽभिनवप्रयोगनिपुणां तीव्रां मनीषां वहन्-
त्यह्नायाधिजगाम तत्त्वविशदं संविद्विलासं धिया
सेयं प्राप्तवती पदं मतिमतां प्राप्यं पठन्ती गुरो-
श्छात्राणां परितोषपूर्तिकरणे प्राध्यापिकाऽभून्नवा॥ ५२॥

दृप्तं नैव मनो न बुद्धिविभवे कुण्ठा समासादिता,
नैवानर्थपरम्परामुपगतोऽस्त्यर्थागमो जीविते।
क्लेशावेशवशान्न जातु हृदयं तत्याज निष्कम्पतां
धैर्येणात्मतपस्यया च विकृतिस्तस्थौ क्षणं नायुषि॥ ५३॥

चित्रं काव्यमनादृतं सुकविभिर्भूयोऽपि सम्भावयन्
नानाचित्रमयं व्यधान्नवनवं श्रीरामरूपः कविः।*
सा साश्चर्यमवेक्ष्य तद् बहुविधैश्चित्रैर्नवीनक्रमं
काव्यं मुद्राप्य यत्नादवसरमनयत् सत्पुरस्कारमामुम्॥ ५४॥
(काव्यं मुद्रणतः परं ननु पुरस्कर्तुं व्यधात् प्रक्रमः॥)

काश्यां संस्कृतसत्कवेर्भवति नो यावत् स्वमञ्चः स्थिरस्-
तावन्नूतननिर्मितावुदयते नैव प्रवृत्तिः कवेः।
इत्यालोच्य तया व्यधायि मिलितैर्मित्रैः कवीनां नवा
संस्था सा 'कविभारती'-ति विशदख्यातिं गता भारते॥ ५५॥

सप्राणा कविभारती सहृदयान् निर्मत्सरान् पण्डितान्
नव्यान् भव्यतमान् कवीन्द्रतिलकाँश्चाविश्चकारोत्तमान्।
संस्थोत्थापनलग्नविज्ञसमितौ साप्यद्वितीयां स्थितिं
बिभ्राणा कविकर्मसु प्रतिदिनं प्रायो बभौ दीपिता॥ ५६॥

श्लाघ्या सा प्रकृतिर्यया शुभतमाचारैर्विचारैः प्रियैः
सर्वेषामपि सन्दधाति मधुरं श्रेयः प्रकर्षं श्रियः।
निर्व्याजव्यवहारतोऽपि मनसि प्रीतिं परेषां सतां
तन्वानाऽनुदिनं बिभर्ति हृदये क्षेमं च योगं तथा॥ ५७॥

श्रीचैतन्यमहाप्रभोरनुचरी या भक्तिभावैर्वृता
या लीलाचरितैर्हरेरनुदिनं श्रद्धालुतां बिभ्रती।
सा कर्माण्यखिलानि केशवपदाम्भोजेऽर्पयन्ती मुदा
सुप्रीता व्यदधादनन्यमनसा विष्णोः समाराधनम्॥ ५८॥

सा निष्कामधियाऽतिदुर्घटतमं कर्म प्रियं कुर्वती
श्रान्तिं नानुबभूव नापि विपुलायासाद् विरामं दधौ।
शास्त्रीयाणि विशालकायजटिलान्यापूरयन्ती नवैर्-
व्याख्यानैरथ पुस्तकानि विदुषां प्रीत्यै सदैवालिखत्॥ ५९॥

---

* गत शताब्दी के अप्रतिम चित्रकवि पं० रामरूप पाठक अतिवृद्ध एवं निरीह अवस्था में स्वान्तः सुखाय ही अद्भुत चित्रकाव्य लिखा करते थे, जब ''बहनजी'' ने उनकी कुटिया में जा कर उनकी वे रचनायें देखीं तब उनकी विद्या से चमत्कृत एवं श्रद्धावनत भाव से स्वयं उन छोटे-छोटे कागज़ों पर लिखी हुई सब रचनायें लेकर अच्छे कलाकारों द्वारा उन्हें कलात्मक रूप में लिखवाकर 'ब्लॉक' बनवाकर सुव्यवस्थित रूप में सम्पादित, प्रकाशित किया, फिर उस पर राष्ट्रीय पुरस्कार भी पण्डितजी को प्राप्त हुआ (इसके लिए अपेक्षित यत्न किया)। —सम्पा०

शिक्षोत्थापनकौशलेन नितरां देशे विदेशे तथा
प्रज्ञानां परिषत्सु गौरवमयीं प्रापत् सपर्यां पराम्।
अस्मिन्नेव विधावधीतिविषये संस्कारमातन्वती
भेजे पूज्यतमं पदं कुलपतेः खैरागढ़े प्रौढिदम्॥ ६०॥

आद्ये प्राचार्यवर्ये विधिवदधिगते पूर्णविश्रान्तिलाभं
या संस्थाया व्यवस्थामधिकतमदिनं यावदङ्गीचकार।
तत्राध्यापननीतिरीतिमनघामापूरयन्ती भृशं
कार्यं सन्धेयमात्रं चिरतरमतुलं व्याकरोत् सावधाना॥ ६१॥

साङ्गे सङ्गीतशास्त्रे विहितबहुविधायाससाध्यं दधाना
संस्थानस्य प्रकर्षं सविधि विदधती शासने लब्धकीर्तिः।
नानारूपान् प्रभूतान् निरुपममहिमोत्साहपूर्णान् प्रबन्धान्
प्रीत्या सम्पादयन्ती जगति धवलितां कीर्त्तिमेषाऽऽससाद॥ ६२॥

खैरागढ़े विततनिर्मलकीर्तिविश्व-
-विद्यालयः कलकलाललितानुबन्धः।
सङ्गीतशास्त्रपरिशीलनकेन्द्रबिन्दुः
सिन्धुर्जयत्यनुपमः श्रवणामृतस्य॥ ६३॥

तत्राभवत् कुलपतिर्निजकर्मयोग-
-सिद्धेऽर्थशोधवलिता महितार्यवृत्तिः।
शर्माऽर्हताऽऽदृततमा विदुषी वरेण्यैर्
नीराजिता बुधवरैर्भुवि भासते स्म॥ ६४॥

या भारताद् बहिरुदारतरे विदेशे
सङ्गीतशास्त्ररसिकैरसकृत् समानम्-
आमन्त्रिता गतवती सहगीतविद्यैः
प्राप्तादरा व्यलसदुच्चतरार्हणाभिः॥ ६५॥

यस्याः सद्मनि साधवः, सुमनसो, विद्यार्थिनो, लेखकाः
भक्ताः, सच्चरिताः, सुचारुरचनाशिल्पे नदीष्णा जनाः।
अस्तोभं प्रविशन्ति शान्तमतयः सङ्गीतविद्याव्रताः
काव्यालापकथासु विश्रुततमाः सम्भाविता भान्ति ते ॥ ६६॥

*उद्याने रमणीयतैकनिलये सारस्वतेयेऽद्भुते*
*काचित् प्रेमलता तदीयगरिमोद्गारार्थमत्रोद्गता।*
*तस्याः कोमलपल्लवैः परिमलोत्कृष्टैः प्रसूनैर्नवैः*
*सर्वाशाः परिपूरिता मधुकरा वाचालिताश्च द्विजाः॥ ६७॥*

यस्या आत्मनि नाप्रतीतिरभवन्-नो संशयं गाहते
बुद्धिर्न प्रतिभा विमुञ्चति निजच्छायां मनोहारिणीम्।
सङ्कल्पोऽतितरां दृढत्वमयते, दृष्टिर्न च म्लायति
सर्वत्रोत्सहमान-मानसमलङ्कृत्य प्रभा मेधते॥ ६८॥

या जानाति न दुर्वचांसि वदितुं नो वा वृथा विग्रहं
चित्ते स्वच्छतमेऽनुरक्षति चिरं नैवापकर्तुं स्पृहाम्।
या सर्वानतिथीन् विभावयति सत्कारैरुदारैर्भृशं
या भृत्यानपि दुर्लभोपकरणैरानन्दयत्यन्वहम्॥ ६९॥

या निद्राति कदापि नापसमये, नालस्यवश्यं मनो
गम्भीरार्थविचारणप्रकरणे मुह्यत्यसम्भावितम्।
नो शैथिल्यमुरीकरोति मनसः प्राप्तोपकारक्षणे
नो कौमार्यमहाव्रताय कुरुते जातु प्रतीपक्रियाम्॥ ७०॥

यस्या मानसमूर्मिलं भवति यद् भक्त्या हरेः पादयोः
सर्वप्राणवतामशेषविपदस्त्रातुं प्रभुः प्रार्थितः।
दीनानामनुकम्पयाऽर्पितसमीचीनैः क्षमैर्वस्तुभिः
सन्तोषं लभते विपन्नजनताक्लेशान् हरन्ती पुरा॥ ७१॥

विद्याया व्यसने नवीनरचनाऽऽरम्भस्य संरम्भणे
ग्रन्थानां परिपूरणे समुचिताचारव्रतस्यावने।
शिक्षापल्लवनक्रमे स्थितिगतीं सीमन्तिनीं भूमिकां
प्रेम्णोत्साहयति प्रसन्नमधुरालापैर्गृहस्थोचितैः॥ ७२॥

*वीणा पाणितलेऽथ कण्ठकुहरे पीयूषवर्षी ध्वनिः*
*पार्श्वे पुस्तकराशिरङ्घ्रि-निकटे हंसो द्विजोत्तंसकः।*
*श्रोतारो विबुधा वसन्ति सविधे प्रीतिश्च नाट्यागमे*
*सेयं नूतनभारती विजयते लोकेऽपि लोकोत्तरा॥ ७३॥*

सद्वृत्तं सुविभूषणं गुणगणैः पूजास्पदं सत्पदं
निर्दोषं शुभलक्षणं सुमनसामाह्लादनं मादनम्।
हृद्यं पद्यमिवोत्तमं सुरुचिरं रूपं सुवर्णार्चितं
देवि! त्वं त्वमिवावभासि भुवने सर्वार्हणाऽभ्यर्हितम्॥ ७४॥

सेहे नानवधानतां निजजनस्यापि क्षणं कुत्रचित्
नैव व्यक्तिनियोजने प्रमुखता त्यक्तार्हताया अपि।
शास्त्रग्रन्थयथार्थसाधनविधौ प्राध्यापने गायने
छात्राणां परितोषणे च महतीं प्रापोन्नतां भूमिकाम्॥ ७५॥

दीपो यद्यपि हन्ति घोरतिमिरं सूते परं कज्जलं
पीयूषं सरधा मधूद्गिरति चेद् दंशैस्तनोति व्यथाम्।
अज्ञानं पठतां हरन्नपि गुरुः स्वच्छन्दतां वारयत्-(त्ये)
-येवं कोऽपि न केवलं जनयति प्रायः सुखं शाश्वतम्॥ ७६॥

*सा शीलस्य शिखामणिर्मधुमती योगस्य या भूमिका*
*सिद्धिर्मूर्तिमती तपस्विजनिता प्रीतिः समाधेः स्थिरा।*
*कीर्तिः संयमशेवधेरनुपमा रीतिः प्रतीतेर्गिरो*
*जीयात् प्रेमलताऽवदातहृदया श्लाघ्या सतां संसृतेः॥ ७७॥*

सङ्गीते प्रथमानकीर्त्तिलसितैर्वर्गैः सगर्वार्चितैः
प्रख्याता रसिकव्रजे 'बहिनजी'-त्याख्यां दधाना नवाम्।
अत्यन्तादरभाजनं सुमनसामामोदसंवर्धनम्
कार्यैरर्जितवैभवं विजयते प्राणात्ययान्तं भुवि॥ ७८॥

दाक्षिण्यं गुरुदेवपूजनविधौ निर्व्याजभव्यं मनो
लग्नं विज्ञजने, सुचारुचरिते सेवाव्रतं बिभ्रती।
विद्यादानमहाव्रते रसवती प्रीतार्थदानोत्सवे
स्पर्धायुक्ततमा प्रसीदतितरां हर्षप्रकर्षार्चिता॥ ७९॥

या नैरुज्यमपि स्वकीयवपुषो बुद्धेः श्रमाधिक्यतो
नो संरक्षितुमाचकांक्ष सततं सद्ग्रन्थसम्पूर्त्तये।
नाल्पीभावमुरीचकार विशदव्यापारतो दैहिकात्
इत्येवं मधुमेहदुर्गदवशाज्जाता भृशं दुर्बला॥ ८०॥

बुद्धिः संशयचण्डमारुतमहावेगेन नान्दोलिता
न भ्रान्त्या विपरीतमर्थनिचयं जग्राह शास्त्रेक्षणे।
नैवानर्थपरम्परां प्रथयितुं सा कुत्रचिद् दुर्ग्रहं
धार्ष्ट्येनाप्युररीचकार रचनाक्षेत्रे क्षणं जातुचित्॥ ८१॥

शृङ्गारो वाग्मितायाः सुरुचिररचनाशिल्पलक्ष्म्या विलासः
प्राणाः कर्मण्यतायाः सकलसुमनसां चन्दनाद्रेः समीरः।
या हेतुर्ग्रन्थरत्नैः शबलितकिरणैर्भूरिभाषासमृद्धेः
सत्कीर्त्तेर्मन्दहासो जयति निरुपमासंविदः स्फूर्तिमूर्तिः॥ ८२॥

या सौशील्यकलानिधिः शुभतमा या शेवधिः संविदां
या भूषा बहुमूल्यरत्नरचिता या श्रीरुदारा गिराम्।
या कीर्तिर्धवला सतां सुमनसामुत्फुल्लतासाधनं
या प्रीतिः शुचिनीतिरीतिलसिता सा श्रेयसे स्यात् सदा॥ ८३॥

मर्यादायाः सपर्या जयति सुविमलप्रीतिनिष्ठाऽर्हताया
अत्यन्तोत्कृष्टभूमिः सकलसुमनसामार्यताया विभूतिः।
कल्याणी कल्पनायाः प्रतिकृतिरनघा साधुता बन्धुताया
दीनानां कल्पवल्ली विलसतु मुदिता मोदमग्ना समाधौ॥ ८४॥

*या नो दर्पमहाज्वरोग्रजनितं तापं विसेहे क्षणं*
*क्रोधावेशवशात् परापकरणे यस्या न लग्नं मनः।*
*क्षुत्तृष्णातरलेन हन्त मनसा दैन्यव्यथां नान्वभूत्*
*सा काचिद् भुवि देवतेव मुदिता पूर्णं व्यनैषीद् वयः॥ ८५॥*

यस्या जीवनपद्धतिर्न विकृतिं लेभे कदाप्यायुषि
नैवात्मीयजनेषु या विषमताबुद्धिं समासादयत्।
पूर्णं सद्विनयं बभार हृदये लोकेषु लोकोत्तरं
सर्वत्रैव विशिष्टतां स्वजनुषः प्रास्तौत् सतां प्रीतये॥ ८६॥

ध्यायन्ती विषमेक्षणं न विषमां दृष्टिं बभार क्षणं
साऽर्चन्ती च विषादमाप जनने नो वा विषादं हृदि।
विद्वेषं दधती कदापि न दधौ विद्वेषमेषाऽऽत्मनि
कृष्णं निर्गदमाश्रयन्त्यपि न सा भेजे वपुर्निर्गदम्॥ ८७॥

*या लौल्येन विनैव बाल्यमनयत् प्रीतात्मना जीविते*
*तारुण्ये न मनो मनागपि दधे नैसर्गिकीं विक्रियाम्।*
*प्रौढत्वे निजकार्यभारवहनासक्त्या प्रसक्तिं तनोर्*
*नो दध्यौ सुखभोगमीप्सिततमं भक्त्या विरक्तं मनः॥ ८८॥*

कीर्तिर्यस्या भ्रमति भुवनाभोगभव्यान्तराले
प्रीतिर्नन्दति सख्यसौख्यसुभगोद्यानोल्लसत्सौरभे।
रीतिः काचन निर्व्यलीकविधया निर्व्याजशुभ्राशया
लोकेऽलौकिकतामुपेत्य जगति ज्योतिः परं ध्यायति॥ ८९॥

ग्रन्थग्रन्थिमतीव तत्परतया या विश्लथं कुर्वती
साहाय्यं व्यदधादभारतमलं शास्त्रार्थनिर्धारणे।
आचार्यस्य मनस्यधारयदियं शास्त्रानुकूलां स्थितिम्
आत्मानं प्रति सत्प्रतीतिविधया विश्वास एवार्जितः॥ ९०॥

*अस्या जीवनसङ्गरेषु विजयः सत्कर्मसन्निष्ठया*
*लोकेऽलौकिकलाभहेतुकमभूदानन्दसंवर्धनम्।*
*सम्मानोऽत्र बहुश्रुतेषु, ललितं सख्यं पवित्राशये-*
*ष्वौदार्यं शुचिमानसेषु लसितं विद्वत्सु पूर्णादरः॥ ९१॥*

यस्या जीवनमुत्तमोत्तमगुणैरश्लिष्टमालोक्यते
शस्या सङ्गतिरत्युदारविबुधैः सन्दृश्यते सूरिभिः।
अस्या मानवतानुरक्तिरखिलं कालुष्यमक्षालयत्
लब्ध्वा सा गुणसन्मणीन् धनवतामग्रेसरत्वं गता॥ ९२॥

या चैषणात्रितयमप्यपसार्य चित्तान्-
निष्कामकर्मविषये रुचिमाबबन्ध।
योगीन्द्रदुर्लभतमं फलमाप्य कृष्ण-
पादारविन्दमकरन्दकणं सिषेवे॥ ९३॥

वैराग्यमेव जगतः पितुराससाद*[१]
लोकोपकारकरणे रसमाप मातुः।
शश्वत् कृतेन तपसा परिशुद्धभावा
लोकोत्तरत्वमभजज्जगति स्थिताऽपि॥ ९४॥

स्निग्धं सहोदरमिव प्रथितस्वभावम्
*आनन्दकृष्णम*निशं हृदयेन मेने।*[२]
निर्व्याजभव्य-शुचि-सद्व्यवहारजातैर्
अन्योऽन्यमुल्लसति पावनरागवृत्तिः॥ ९५॥

*वात्स्यायन*नोल्लसितवंशसुमौक्तिकाभां
विद्यासुकीर्त्तिनिलयां कपिलां*[३] स्वसारम्।
शश्वत् परस्परमुदित्वररागबन्धैर्
भिन्नेऽप्यभिन्नहृदये दृढमन्वभूताम्॥ ९६॥

खैरागढात् प्रतिनिवृत्य निवासयोग्यम्
अन्विष्य सद्म सुखदं बत काशिकायाम्।
अक्रेष्ट भव्यभवनं तु पराधिलक्ष्य-
मूल्याधिकैरपि धनैर्मुदमापदेषा*[४]॥ ९७॥

*आम्नायेति* तदीयनामकरणे यस्याः प्रसन्नं मनः
सर्वं चारुतरं सुशैक्षिकमथाकार्षीत् सुकर्मानिशम्।
अस्मिन्नुत्तमसद्मनि व्यवहृतौ विद्याकलाचर्चया
प्रज्ञानां निवहं प्रसादयति सा नित्यं नवैः प्रक्रमैः॥ ९८॥

*छात्रो गुरुप्रतिकृतिर्भवति क्रियासु,*
*विद्यासु, पाठनविधासु, विचारणासु।*
*अन्वर्थतामुपगता रुचिरोल्लसन्ती*
*शर्मोत्तरा जगति प्रेमलताऽभिधाना॥ ९९॥*

---

१- पूज्य पिताजी ने बचपन में भरपूर एवं एम०ए० पर्यन्त आंशिक रूप से पोषण तथा शिक्षणादि का आर्थिक भार वहन किया, फिर तो स्वयं बहिनजी अपनी छात्रवृति-आदि अर्जन से ही अत्यन्त संक्षेप में अपना निर्वाह करते हुए पू० पिता-माताजी को भी सम्हालने लगीं। इसीलिये कहा गया कि पिताजी से जगत् से वैराग्य पाया (क्योंकि वे वैष्णव-संन्यासी हो गये थे) और माँ से लोकोपकार की वृत्ति तथा रस (रसोई तथा विविध व्यञ्जन बनाने की निपुणता सहित उदार अभिरुचि) पाये।

२- स्वनामधन्य **श्री वासुदेवशरण अग्रवाल** जी एवं **श्री राय कृष्णदास** जी से स्निग्धगुरुतुल्य समुदात्त स्नेह एवं शिक्षण पाया था तथा उनके (क्रमशः—) सुशिष्य व सुपुत्र प्रो०राय आनन्दकृष्ण जी से सतत बड़े भाई जैसा सहयोग-स्नेह-समादर-पूर्ण सम्बन्ध बना रहा था, जो आजीवन रहा ही अब तक उस स्मृति का वैसा ही संरक्षण भी चल रहा है। —ऊर्मिला

३- **डॉ० श्रीमती कपिला वात्स्यायनजी** से प्रेमलता-बहिनजी का हार्दिक सम्बन्ध, चिन्तन एवं वृत्ति की घनिष्ठता आदि प्रायः जुड़वाँ बहन-जैसे अथवा उस से कहीं अधिक बढ़कर रहे; कर्मयोग की दिशा में तो वे इन्हें अपने आदर्श-वत् मानती रहीं।

४- अपने बहुमूल्य-अमूल्य-दुर्लभ ग्रन्थसङ्ग्रह को भलीभाँति रखने एवं समय-समय पर आते रहने वाले जिज्ञासु-अतिथि आदि की सुविधा के लिये अच्छे भवन की आवश्यकता थी किन्तु **आजीवन सहृदय-दानशील वृत्ति एवं प्रखर सत्यनिष्ठामय जीवनशैली** के कारण १९५७ से 'रीडर'-१९८१ से 'प्रोफेसर', १९८५-८८ 'वाइसचांसलर' पदों पर रहते हुए भी १९८९ में बहनजी के पास अपने निवास के लिये भी एक भवन लेने के लिये पर्याप्त राशि नहीं थी, अतः अपनी कुल जमा पूँजी व्यय करके एवं मित्रों से ऋण लेकर यह निवास '**आम्नाय**' खरीदा गया था, फिर दैनिक खर्च में सङ्कोच करके वह ऋण चुकाया गया। —सम्पा०

*पित्रोस्तपः फलरसामृतदुग्धसिन्धुः*
*सङ्गीतशास्त्रहृदयस्य यशः पताका।*
*विद्यार्थिनामभिमतावनिकल्पवल्ली*
*सामश्रुतिर्धृततनुर्जयतीह काऽपि॥ १००॥*

सौभाग्यशेवधिरनुत्तरदेशिकानां
सद्ग्रन्थलेखनकलासु सदाग्रगण्या।
देशे विदेशविबुधे च समानमाना
जागर्ति काऽपि विदुषी विदुषां समाजे॥१०१॥

विद्योत्तमोपचितसत्कविकीर्तिरेखा
लेखैः समर्चिततरैर्यशसाऽर्चिताऽपि।
विद्यावतां सदसि नृत्यति वैजयन्ती
कण्ठे विराजतितरां मणिमालिका सा॥ १०२॥

*'सोमास्कन्द'*-महानुभावतिलकं तातोपमं श्रद्धया
या मेनेऽनुदिनं तदीयवचनं शश्वन्निजश्रेयसे।
सोऽप्यस्यां स्वजनोचितं सुरुचिरं निर्देशनं व्याहरन्
वात्सल्येन तदीयगौरवमयं भावं सदाऽपालयत्*॥ १०३॥

धीराणामपि धीरता गलति यद्धैर्यं विलोक्य स्थिरं
गाम्भीर्यं मनसो निरीक्ष्य नितरां वारां निधिर्वेपते।
त्रस्तानामुपकारकर्मणि सतां विघ्नानशेषान् हरन्
दाक्षिण्यं प्रकटीकरोति करुणाकन्दः सुमन्त्राक्षरैः॥ १०४॥

यः सम्पत्सु विपत्सु तुल्यहृदयो यो धीरवीराग्रणीर्
यो नैवाचरति स्म किञ्चिदपि दुष्कर्माधिकारीच्छया।
यो नैवोन्नतिमाचकांक्ष महतां चाटूक्तिभिः, सेवया
योग्याद् योग्यतमोऽपि नापकुरुते कस्यापि यो गर्वतः॥ १०५॥

मन्त्रो यस्य दुरन्तसम्भ्रमसमुद्भ्रान्तो समस्यामये
कार्ये विघ्नभरैर्विकुण्ठिततमे सद्यः प्रसूते फलम्।
प्रज्ञायाः समुपासनेऽतिनिरतो यो निर्मलज्योतिषा
दूरीकृत्य तमांसि दर्शयति नः कल्याणकृत् प्रक्रियाम्॥ १०६॥

---

* **पं० श्री सोमास्कन्द्** (का०हि०वि० के सहायक रजिस्ट्रार पद पर रहते हुए भी जो) अपनी विद्वता, विचक्षण प्रतिभा एवं कानून-सम्बन्धी भी कार्यकुशलता के नाते प्राचीन सभी महामहिम कुलपतियों के दाहिने हाथ जैसे घनिष्ठ सहयोगी रहे एवं व्यक्तिगत जीवन-शुद्धि तथा शैली में महामना मालवीय जी के आदर्श का सतत आचरण करते हुए आप 'स्थितप्रज्ञ'—लक्षणों के सजीव प्रतिमान हैं। १०३ से १०६ पर्यन्त श्लोकों में इन्हीं का वर्णन है। प्रस्तुत खण्ड में ''प्रेममयी तपस्विनी'' शीर्षक—से संस्मरण इन्हीं के द्वारा लिखित हैं।

आर्षग्रन्थसहस्त्रबोधविषये यः प्रेरयत्यञ्जसा
यो वर्षत्रितयेन पाणिनिनयं सम्पूर्णमाध्यापयत्।[१]
तं '*जिज्ञासु*'-महर्षिणं बुधवरं विद्वद्भिरत्यादृतं
शिष्या प्रेमलता समादरभरैः सस्मार श्रद्धान्विता॥ १०७॥

यस्याध्यापनकौशलेन विदुषी *प्रज्ञा* च *मेधा* तथा
चान्या धन्यतमाऽभवन् वसुमती-क्रोडेस्थिताः कन्यकाः।
सद्वृत्तेन, गुणेन, शीलनिलयेनात्यन्तनम्रात्मना
कर्मण्येन सदार्यसंस्कृतिधनेनासीत् स सर्वादृतः॥ १०८॥

यो वाग्मिता-निटिल-कुङ्कुमशोणबिन्दुर् वैदुष्यशेवधिरनर्घ्यगुणाभिरामः।
विद्या-कला-ललित-कल्पनया समृद्धो *विद्यानिवास* इति विश्रुतनामधेयः॥ १०९॥

योऽनेकभाषाऽध्ययनादुपात्तविज्ञानवैदुष्यविभूष्यकीर्तिः
विद्वज्जनाऽभ्यर्चितवाग्मिताया अभ्रङ्कषोऽभ्यर्हितनीतिराशिः।
यं राष्ट्रभाषाऽमरदेवभाषा विश्वस्य भाषा त्रितयी समृद्धा
त्रिवेणिकेवाश्रयतेऽनुरक्ता तं तीर्थराजस्य बिभर्त्ति लक्ष्मीः॥ ११०॥

सोऽस्यां सदैवानुजयानुरूपां
दिव्याशिषं यच्छति सुप्रसादात्।
पूज्याग्रजं तं सततं सुलभ्यं
संवन्दते स्म प्रतिवासरं सा[२]॥ १११॥

आद्यां पंक्तिमलङ्करोति विदुषां सौजन्यवारां निधिर्
दुर्बोधान् विषयानतीव सरलीकर्त्तुं गृहीतव्रतः।
वाग्मित्वेऽनुपमः प्रसन्नवदनो गम्भीरतत्त्वस्फुटी-
कारे स्फारयतिर्वचोऽमृतरसं वर्षंश्चिरं नन्दतु॥ ११२॥

---

१- **ब्रह्मर्षि पं० ब्रह्मदत्त जिज्ञासु**—जिन्होंने पाणिनीय-व्याकरण-अध्ययनाध्यापन की अतिप्राचीन पद्धति—(अष्टाध्यायी-मूलक्रम से अध्ययनादि) को पुनरुज्जीवित किया एवं चालीस पाठों या छह महीनों में संस्कृतव्याकरण की इतनी पकड़ करा देने वाली सुगम प्रक्रिया बनाई जिससे जिज्ञासु की संस्कृत भाषा में विश्वासपूर्ण गति हो सके। उनकी प्रमुख शिष्या आचार्या डा० प्रज्ञादेवी एवं आचार्या मेधादेवी द्वारा स्थापित '**पं० ब्रह्मदत्तजिज्ञासु-स्मारक पाणिनिकन्या-महाविद्यालय**'—वाराणसी में संस्कृत-संस्कृति-शिक्षण का अखिलभारतीय एक अद्वितीय संस्थान है, इस की बीजाङ्कुर दशा से लेकर पल्लवित-फलित होने तक 'बहनजी' का सतत सहयोग रहा; इसके अभ्युदय में वे पूज्य ''गुरुजी'' का ही स्नेहाशिष साक्षात् अनुभव करती रहीं। —सम्पा०

२- पद्मविभूषण **पं० श्री विद्यानिवास मिश्र** जी का स्नेहार्द्र बडे भाई जैसा सम्बन्ध 'बहिनजी' के प्रति रहा 'बहिनजी' द्वारा आयोजित विचारगोष्ठियों में वे सदैव सक्रिय रूप से सम्मिलित होकर गोष्ठी की शोभा एवं उपयोगिता बढ़ाते रहे, इसके लिये 'बहिनजी' का अनुरोध कभी नहीं टाला। अन्य भी अनेक प्रसङ्गों में वैचारिक-सैद्धान्तिक सत्परामर्श सुलभ रहा 'बहिनजी' के निवास का नामकरण 'आम्नाय' भी इन्हीं का चुना हुआ है।

नाट्ये कलासु ललितासु च सानुरागो
बद्धस्पृहः सकललोकविशोककार्ये।
सङ्गीतके परमपावनसंस्कृतौ च
*श्रीभानुशङ्करसुधीर्मेहता*ऽग्रजोऽस्याः[1] ॥ ११३ ॥

यो निःस्पृहोऽपि भागिनीमनुजास्वरूपाम्
एनां सदा परमवत्सलभावपूर्णः।
प्रोत्साहयत् सकलशिक्षणकर्मसक्तां
भक्तां सतां सुमनसामयमन्वयुङ्क्त॥ ११४॥

यस्या आसीदभिमतवरः वासुदेवः[2] सुधीन्द्रः
श्रीमान् *स्मार्तो* रचयतितरां नाट्यशास्त्रानुरूपम्।
सज्जीकारे परमकुशलो रङ्गमञ्चं व्यधायि
प्रख्यातोऽसौ भुवि नवनवश्चित्रकारोऽद्वितीयः॥ ११५॥

*श्री चन्द्रशेखर*[3] इहोन्नतनृत्यशिल्पे
दक्षः सदा प्रियजयासहितः प्रसन्नः।
नाट्याभिनेय-बहु साधयितुं समर्थस्
तस्या निरन्तरसहायकरूप आसीत्॥ ११६॥

*श्रीषड्गोपन्*[4] बालकोचितरुचिं प्रोत्साहयन् गीतकैः
शास्त्रीयाद्भुतकौशलेन ललितं कण्ठस्वरैः पूरयन्।
अस्याः शस्यमनोऽनुकूलरचनाचारुत्वमुदबोधयन्
धन्यो गायकशेखरश्चिरमिमामुल्लासयन् नन्दति॥ ११७॥

अस्याः सन्निकटे वसन्नभिमतं सौविध्यमुद्भावयन्
सङ्गीतेन सदा प्रसादयति यो सद्विद्यया सत्क्रियः।
साहाय्यं वितरन् नवेन विधिना तस्यै प्रसादोन्मुखो
मेधावी निपुणो विदग्धविनुतोऽस्याऽग्रजः सर्वथा॥ ११८॥

पुण्*योपाध्याय*वंशे समजनि कुशलो *वैद्यराज*स्तपस्वी[5]
आयुर्वेदे वरेण्यादिह जगति सदा विश्रुताचार्यवर्यात्।
सम्प्राप्तज्ञानराशिर्विशदमतिमतामग्रणीः शुद्धबुद्धी
रोगार्तानाश्वगाधादुदधिजलतलादेष सूद्धर्तुमीष्टे॥ ११९॥

प्राप्य प्रेमलतां पितेव मुदितो वात्सल्यपूर्णात्मना
गीतं श्रावयितुं प्रभोर्गुणगणोद्गीतं मुदैवादिशत्।
सा च स्नेहवशादुदात्तविधिना भक्त्या स्तुतिं कुर्वती
हर्षाश्रूणि दृशा विमुञ्चतितरां शृण्वन् स गीतध्वनिम्॥ १२०॥

---

१- स्वयं चिकित्साक्षेत्रीय होते हुए भी काशी की विविध कला-सङ्गीत-नाट्य-संस्कृति के **रसिक प्रेक्षक, पोषक, संरक्षक. विशेषज्ञ, विद्वान् डॉ० भानुशङ्कर मेहता का भी** स्नेह-सौहार्द-मय बड़े भाई जैसा सहयोग एवं परामर्श 'बहिनजी' को सदैव सुलभ रहा।

२-३- **बहिनजी द्वारा प्रवर्त्तित 'अभिनय-भारती'** के१९७३-८४ तक के सभी प्रयोगों (नाट्यशास्त्रानुरूप नृत्य-गीत-वाद्य-युक्त पूर्वरङ्ग-सहित सर्वाङ्ग नाट्याभिनय-प्रस्तुतियों) में तथा अन्य भी जीवन-व्यापी विविध कार्यों में **श्री वासुदेव स्मार्त** (बड़े भाई जैसे) एवं **श्रीमती जया सहित प्रो०सी०वी० चन्द्रशेखर** छोटे भाई जैसे सर्वदा सर्वथा सहयोगी रहे। —ऊर्मिला

४- **श्री०वी० षड्गोपन्**—जिन्हें बहिनजी 'अण्णा' (तमिल में बड़ा भाई) कहती थीं।

५- **पं० श्री यदुनन्दन उपाध्याय 'पीयूषपाणि'**—चिकित्सक, हमारे लिये पितृतुल्य स्नेहवर्षक रहे।

अत्यन्तस्थविरः स तामुपगतः प्रीत्योल्लसन्मानसः
हृद्यं चादिशतीव गातुमुचितं सङ्कल्पसिद्धं शिवम्[1]।
साऽपि प्रेमपरिप्लुता तदुदितामिच्छां शिरस्याभृतां
धृत्वा गायति शुद्धबुद्धहृदया सत्प्रीतये सर्वदा॥ १२१॥

विद्वन्मौलिमणिर्गजानन इति ख्यातो विदामग्रणीर्-[2]
यस्याभूद् विमला प्रिया गुणवती विद्याकलोद्भासिता।
तौ जाया च पतिश्च पूजिततमौ यस्याः सदास्तां प्रियौ
सर्वस्मिन् समये हृदा समुचिताचारैरुदारौ स्मृतौ॥ १२२॥

तथा च '*गँगराडे*' संज्ञको वै
*कैलासचन्द्रो* भ्राता वरीयः।
स्वान्तःसुखायैव चिकित्सको यः
सङ्गीतविद्यामुररीचकार॥ १२३॥

अस्याः सन्ति परः सहस्रसुहृदो मान्या वदान्याः प्रियाः
विद्यायामनवद्यकर्मणि रताः स्निग्धा बुधा बन्धवः।
नामग्राहमशेषबान्धवजनस्मृत्या न सच्चर्चया
स्तुत्या चापि न सम्भवेम नमने, *नाम्ना विना तान् नुमः*॥ १२४॥

यावत्प्रापि फलं यया गुरुपदद्वन्द्वस्य संसेवया
यावच्चिन्तितरत्नमप्यधिगतं प्रायः समाधिस्थया।
पात्रापात्र-विचारणेन निभृतं सर्वं तदेकान्ततः
प्रीता सा सकलं धनं स्वमनसा स्वस्रेऽनुजायै ददौ॥ १२५॥

शीलं यस्याः समानं, सदृशतममुदाहार्यमध्यात्मतत्त्वम्
औदार्यं तुल्यमास्था भगवति परमा भक्तिरूपाप्यभिन्ना।
छाया कर्मण्यतायाः, प्रकृतिरनुकृतिर्भासते चाद्वितीया
सेयं चैकत्वमाप्ता विलसति नितरा*मूर्मिलाख्या स्वसा* ते॥ १२६॥

सौजन्येन, नितान्तदुर्लभतमज्ञानेन, स्वाभाविकौ-
दार्येणाथ तितिक्षया, करुणया, भक्त्या हरेरद्वया।
प्रह्वीभाव-समादरादिविधिना प्रज्ञावतां मण्डलं
साह्लादं विदधाति मुग्धवचनैः सत्कर्मभिः शर्मभिः॥ १२७॥

गायत्रीं सुरभिं वृन्दां मञ्जरीं च सुमङ्गलाम्।*
पुपोष तनयासदृशं स्नेहार्द्रहृदयेन वै॥ १२८॥

अष्टादशवर्षमिता गोसेवाऽनुष्ठिता तया।
गोवंशरक्षणायापि सत्याग्रहः सुसेवितः॥ १२९॥

गोसंवर्धनहेतोश्च भृशं दानमदात् सदा।
गोरसो बहुमानेन ह्यर्पितः स्वादितो मुदा॥ १३०॥

---

१- पं० ओङ्कारनाथ रचित स्वरावलि में यजुर्वेद के 'शिवसङ्कल्प'—मन्त्रों का गायन तथा भजन बहिनजी से सुनना श्री० उपाध्याय जी को अतीव प्रिय था, उतना ही उन्हें सुनाना बहनजी को।

२- भारत सरकार तथा महाराष्ट्र विद्वन्मण्डली द्वारा भूरिशः सम्मानित **पं० गजानन शास्त्री मुसलगाँवकर** तथा श्रीमती डॉ० विमला मुसलगाँकर

* गोसेवा—बहिनजी के निजी जीवन का महत्त्वपूर्ण अङ्ग रहा। इस सम्बन्ध में अन्य लेख परिशिष्ट में द्रष्टव्य।

सद्‌भावः स्निग्धसम्बन्धो मधुरा वचनावलिः।
निश्छलो व्यवहारश्च सर्वे मैत्रीकरा गुणाः॥ १३१॥

सज्जनागमनं गेहे लोककल्याणचिन्तनम्।
विद्या-कला-समुत्कर्ष-चर्चयाऽस्या महोत्सवः॥ १३२॥

विद्यां कलां श्रियं प्रीतिं वितरन्ती निरन्तरम्।
ध्यायन्ती चाक्षरं तत्त्वं सदा सा मुदिताऽभवत्॥ १३३॥

सतां सपर्या व्यसनं व्यसनं शास्त्रचिन्तनम्।
व्यसनं ग्रन्थनिर्माणं व्यसनं भ्रमणं भुवः॥ १३४॥

*औदार्यमार्जवं शीलं त्रिरत्नं यत्र संस्थितम्।*
*ज्ञान-विज्ञान-सम्पन्नं तदध्यात्ममुपास्महे॥ १३५॥*

*वैदुष्यमथ सौजन्यं युगपद् यत्र राजते।*
*तदद्‌भुततमं धाम ध्यायामस्त्वात्मशुद्धये॥ १३६॥*

*मनसा शिवसङ्कल्पो वचसाऽमृतवर्षणम्।**
*वपुषाऽऽर्यक्रियाकल्पो यत्रैकत्र विराजते॥ १३७॥*

मदोऽसूयाऽथ मात्सर्यमात्मश्लाघा प्रवञ्चनम्।
अवलेपो दृढाक्षेपस्तस्याश्छायां न चास्पृशत्॥ १३८॥

परस्परं स्पर्धमाना दुर्लभा सद्‌गुणावलिः।
यस्यां वसतिमेवाप्तुमाचकांक्ष निरन्तरम्॥ १३९॥

*यस्याः शश्वदुदाहार्या स्वच्छा जीवनपद्धतिः।*
*निर्व्याजं चारुचरितं प्रशस्यं वचनामृतम्॥ १४०॥*

कल्याणी प्रकृतिः सदा विलसतु, प्रीणातु कर्मण्यता,
मिथ्याचार-विवर्जने रुचि सदाऽऽहार्या वचो माधुरी।
आसक्तिः सुकृते, परोपकरणे प्रीतिः, प्रतीतिः स्थिरा
विद्याया ग्रहणे, श्रियो वितरणे तुल्या रतिर्जायताम्॥ १४१॥

*कला-सङ्गीत-भारत्या अङ्के प्रेमलतोद्‌गता।*
*दिव्यां कल्पलतां नीचैरवतार्य दिवं गता॥ १४२॥*

*जीवनं मरणं यस्याः स्पृहणीयतमं सताम्।*
*आद्यमभ्युदयेनाढ्यम् अन्त्यं निःश्रेयसात्मकम्॥ १४३॥*

यस्याश्चरित्रविषयेऽर्जितचारुताया
उच्चस्तरीयमहिमोपचयो विभाति।
प्रज्ञा च नित्यनवदुर्लभकल्पनायाः
क्रोडे स्थिता सहृदयान् प्रमदीकरोति॥ १४४॥

---

* सदा ही उत्तम एवं सबके कल्याण-चिन्तन-युक्त ही सङ्कल्प वे करती रहती थीं, कभी स्वार्थचिन्तन नहीं किया, और कृष्णयजुर्वेद के प्रसिद्ध ६ शिवसङ्कल्प-मन्त्रों ("तन्मे मनः शिवसंकल्पमस्तु") का पूज्य पं० ओंकारनाथ ठाकुर द्वारा निबद्ध स्वरावलि में गान बहुधा किया करती थीं, वह उन्हें तथा सभी वरिष्ठ स्नेहियों को बहुत प्रिय था। —सम्पा०

प्राणेषु सत्सु यदभूदभिरामतायाः
पुण्यास्पदं सकलमङ्गलमूलकायम्।
सम्प्रस्थितेषु खलु तेषु गृहं वपुश्च
सर्वं क्षणेन विपरीतमिदं बिभर्त्ति॥ १४५॥

यस्मिन् निशीथसमये वसुदेवसूनुः
प्रादुर्बभूव जनदुःखनिवारणाय।
मध्येनिशं गतवती सहसा शिवत्वम्
आप्तुं कठोरहृदयामयदोषदग्धा॥ १४६॥

एतज्जीवननाटकस्य चरमं दृश्यं यदाऽऽकस्मिकं
सत्यं किन्तु सुदुःसहं भवति यत् संसारमञ्चे स्थितम्।
आरम्भाङ्कगतं नितान्तघटनाचक्रं प्रपञ्चाञ्चितं
तत्सर्वं प्रसृतं क्षणेन भवति क्षारं श्मशानानले॥ १४७॥

यन्न पुत्रेण सम्भाव्यं न प्रियेण न बन्धुना।
तत्सर्वमन्तिमं कृत्यं श्रद्धयैवोर्मिला व्यधात्॥ १४८॥

अहोरात्रं परिश्रान्ता तत्कृतारम्भसम्भवाम्
क्रियां सर्वां करोत्येषा परिपूर्णां यथामति॥ १४९॥

अपूर्णपूरणे यत्नं तत्समारब्धकर्मणाम्।
देहगेहादिविस्मृत्या करोत्येषाऽनुरागतः॥ १५०॥

तया चिन्तितमप्येषा व्यवधानं विनाऽन्वहम्।
यथापूर्वं कर्तुकामा विघ्नानामपसारणात्॥ १५१॥

अनुकम्पा हरेर्भूयादकम्पा शक्तिवर्धने।
भूयादनामया सैषा कार्यसिद्धिश्च शाश्वती॥ १५२॥

*प्रेमवल्ल्याः जीवितस्य ह्यमृताब्दे समागते।*
*तत्स्मृतेः स्थायिता-सिद्ध्यै वाङ्मयी क्रियतेऽर्चना॥ १५३॥*

अस्या एवानुरोधेन व्यक्ता काव्यविनिर्मितिः।
रतिनाथो व्यधादेतद् व्यथायाः कथयोद्गतम्॥ १५४॥

कौटिल्यं लयमेतु छद्मविवृतिर्दूरीभवत्वञ्जसा,
* *मैत्रीं* विध्यतु नाप्रतीतिरुदिता, कूटक्रिया नश्यतु।
वक्रत्वं सहजार्जवेन मिलितं न स्यान् न वा वञ्चना
सौहार्दं शकलीकरोतु, न मिथो विश्वासघातो भवेत्॥ १५५॥

—पं० श्री रतिनाथ झा



* यहाँ '**मैत्री**' शब्द में श्लेष है; हमारे बड़े भाई ''अण्णा''—श्री० वी०वी० षड्गोपन् जी (सुप्रख्यात कलाकार, सन्ततुल्य '**त्यागभारती**' के प्रवर्त्तक, एवं ''दिव्यप्रबन्धम्''-आळ्विार-सङ्गीत को पुनरुज्जीवित करने वाले) ने बहिनजी को यह उपनाम दिया था। —सम्पा०

.२.

# सङ्गीत-साहित्य-कलानिधये साधना-शील-सौजन्यमूर्तये व्यक्तये नमः

—पं० वासुदेव द्विवेदी*

संस्कृतभाषाया विविधे विशाले च वाङ्मये सङ्गीतशास्त्रस्य नितान्तं महत्त्वमयं स्थानं सुज्ञातम्। शास्त्रेषु कानिचित् इहलोकोपयोगीनि, कानिचित् परलोकोपयोगीनि, कानिचिद् उभयलोकोपयोगीनी, कानिचिच्च केवलं मुक्तिसाधनोपयोगीनि—इति सर्वविदितमेव। परन्तु सङ्गीतशास्त्रं लोकद्वय-साधकं सन् मुक्तिसाधकमपि भवतीति न केवलं सर्वेषां सङ्गीत-नाट्य-शास्त्राचार्याणां मतमपि तु धर्मशास्त्रकारैरप्ययमेवार्थः समर्थितः। यथा याज्ञवल्क्यस्मृतौ—

वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः।
तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति॥
गीतज्ञो यदि योगेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥

(या०प्रा०११५-१६)

अन्यथाऽपि—

जीवातुर्गदिनां प्रियाविरहिणां, ध्येयं परं योगिनां
दीनानामतिदु:खिनामपि नृणां विश्रान्तिभूमिः परा।
नि:स्वानां परशेवधिर्नवनवो भोगोत्करो भोगिनां
गीतं किञ्चिदमेयरूपमहिमप्राग्भारमुज्जृम्भते॥

(सङ्गीतराज—३/३)

अपरमपि वैशिष्ट्यं सङ्गीतशास्त्रस्य यद् अन्यानि शास्त्राणि देश-काल-वर्ण-जाति-लिङ्ग-अवस्था-आश्रम-पद-प्रतिष्ठानुसारं मानवकर्तव्यसूचकानि तत्र-तत्रोपयोगीनि वा भवन्ति परन्तु सङ्गीतशास्त्रं सकलानपि इमान् भेदान् परिहाय सर्वेभ्य उपयोगिताम् उपकारितां मनोरञ्जकतां शान्ति-माधुर्यास्वादोद्बोधकतां च भजते। सर्वं हि जीवजगत् प्रसादयति, आनन्दयति, मधुरयति, परिपूर्णतां नयति नादात्मसङ्गीतम्। योगिराजेन भर्तृहरिणा मानवजन्मनोऽपरिहार्यलक्षणरूपमेव घोषितं सङ्गीतम्—

''साहित्यसङ्गीतकलाविहीनः
साक्षात् पशुः पुच्छविषाणहीनः॥' —इति

इतिहास-प्रख्यात-बुक्क-हरिहरादीनां विजयनगर-अधीशानां मन्त्रिपदे विराजमानाः वेदभाष्यकाराः सायणाचार्याः न केवलं स्वयं सङ्गीतज्ञा आसन्नपितु स्वतनयं कम्पणमपि सङ्गीतशिक्षणे प्रेरितवन्तः। यथा—

* **''सार्वभौम-संस्कृत-प्रचार''**—कार्य के प्रवर्त्तक-सञ्चालक, उसी में अपने सम्पूर्ण जीवन की आहुति दिये हुए तपस्वी वरिष्ठ विद्वान्। —सम्पा०

अलङ्कारसुधानिधौ—

''तत् संव्यञ्जय कम्पण! व्यसनिनः सङ्गीतशास्त्रे पुनः
प्रौढिं, मायण! गद्य-पद्य-रचनापाण्डित्यमुन्मुद्रय।
शिक्षां दर्शय शिङ्गण! क्रमजटाचर्यासु वेदेष्विति
स्वान् पुत्राननुलालयन् गृहगतः सम्मोदते सायणः॥''

अस्य सकलदेवमुनिमहर्षिसेव्यतया परमभूतस्य सर्वोत्कृष्टकलारूपेण प्रतिष्ठितस्य **सङ्गीतशास्त्रस्य प्रयोगोपेतस्य** साधिका, आराधिका, प्राध्यापिका,पर्यालोचिका, गवेषणा-प्रवर्त्तिका, विश्वविद्यालयेषु **प्रतिष्ठापिका** चासीत् परमविदुषी **प्रेमलताशर्माभिधाना व्यक्तिः।**

सा न केवलं विविधक्षेत्रीयवैदुष्याय सम्मानार्हा अपितु सन्मानवोचितैः गुणैः समृद्धा इति सर्वैरपि सुष्ठु-अनुभूतम्। यथा योगवासिष्ठे ब्रह्मर्षिणा श्रीरामं प्रति सूक्तम्—

''सर्वेषामपि धर्माणां शर्मणां कर्मणामपि।
पण्डितः पुण्डरीकाणां मार्तण्ड इव मण्डनम्॥''

नीति-सुभाषित-ग्रन्थेषु च तादृशानि बहूनि वचनानि दृश्यन्ते येषु मानवीयगुणानां सम्पत्त्या मनुष्यस्य वन्दनीयता महत्ता च वर्णिता।''तेभ्यो नरेभ्यो नमः''—इति नाम्ना मयैकः सङ्ग्रहःसङ्कल्पितः तादृशानां कतिपयपद्यानाम्। ते गुणाः समन्वितरूपेण अनुभूता मया प्रेमलतादेव्याम्—परोपकारप्रवणता-प्रीतिः-स्नेहः-सहृदयता-सद्भावना-समता-व्यापिनी ममता-करुणा-सहानुभूतिः समादर इत्यादयः। समानेषु कनिष्ठेषु वरिष्ठेषु च सर्वस्तरीयपरिचितेषु तस्याः व्यवहारस्तथा स्वाभाविकः स्नेहानुबन्धी चासीद् यथा सर्वेपि विद्वांसः भारतीया विदेशस्था च तां 'बहिनजी' इत्यभिधानेनैव सम्बोधयन्ति प्रतिजानन्ति व्यवहरन्ति स्म।

परोपकारस्य तु सा प्रतिमूर्त्तिरेवासीत्। अहमपि तदनुभवस्य साक्षाद् उदाहरणम्। विंशत्यधिकवर्षपूर्वम् एकदा यदा मम संस्थायाः कृते केन्द्रियशासनादुपलभ्यमानं नवसहस्ररूप्यकाणां साहाय्यम् अकस्माद् अवरुद्धम्। 'मार्च'-मासोऽपि व्यतीतः परं साहाय्यं नैव लब्धम्। तदा संस्थानस्य दैनिको व्ययः कथं वहनीय इति महती चिन्ता मां दुनोति स्म। एतत्सङ्कटनिवारणाय किं करोमि? क्व यामि? कं वा निवेदयामि? इति बहुधा चिन्तयतो मम अन्ततः 'बहिनजी' एव दृष्टिपथमागता। ततो मया सर्वमिदं वृत्तं तस्यै निवेदितम्। अनन्तरञ्च तत्कालमेव सा सहयोगप्रदानाय मामाश्वास्य द्वितीयदिनादेव मम पुस्तकानि परिचितेषु मित्रेषु विक्रीय अन्यतश्चेतस्ततो द्रव्यं संगृह्य स्वकीय-वैदेशिक-शिष्याभ्यश्च द्रव्यमादाय संस्थानस्य दैनिकव्ययसञ्चालने साहाय्यं कर्तुं प्रारब्धवती। पञ्चमासपर्यन्तमयं क्रमः आसीत्। मम तु विश्वास एव नासीद् यत् कोऽपि मम एतादृशं साहाय्यं करिष्यति। परन्तु 'बहिनजी' स्वनाम (प्रेमलतेति) सार्थीकृतवती। तस्या स उपकारः कदापि विस्मर्तुं न शक्यते।

पुनश्च, मामेकाकिनं सुखसौविध्यसाधनविहीने संस्थाने कथञ्चिन्निवसन्तं निरीक्ष्य काले काले द्रव्यदानेन, वस्त्रादि-दानेन, पुस्तकदानेन, स्वनिर्मित-विविध-सुमधुर-भक्ष्य-भोज्यादि-प्रदानेन च यन्मां भ्रातृवत् लालयति-पालयति स्म, तत्सर्वं स्मृत्वा अद्यापि नेत्रे अश्रुपरिप्लुते भवतः।

आचार्यबदरीनाथशुक्लमहोदयेषु दिवङ्गतेषु मम संस्थानस्य अध्यक्षपदमपि कतिचिद् वर्षाणि सा निर्व्यूढवती— एतदपि तस्या सुमहत् साहाय्यं प्राप्तमस्माभिः।

दिवङ्गतायां प्रेमलतादेव्यां 'बहिनजी'-महोदयायामहं कति-कतिभ्यो लाभेभ्यो वञ्चितो जात इति मम हृदयमेव जानाति। तथापि महतः सन्तोषस्य आलम्बो वर्तते यत् तदीया कनिष्ठा भगिनी ऊर्मिला शर्मा—या 'बहिनजी'-महोदयाया अवशिष्टानां कार्याणां सम्पादने तस्याः स्मृतिसंरक्षणे च व्यापृता वर्तते सा—ममापि कार्येषु मयि चापि तथैव श्रद्धावती सहायिका सती स्नेहभावं च बिभर्ति। अथेदानीम् अस्या एवानुरोधादस्य स्मारकग्रन्थस्य कृते कानिचिद् भावकुसुमानि समर्पयन् 'बहिनजी'-महोदयायै नतेन शिरसा श्रद्धया स्नेहेन च शतशतमभिवन्दनानि निवेदयन् विरमामि।

**—वासुदेव द्विवेदी**

**सार्वभौमसंस्कृतप्रचारसंस्थानम् वाराणसी**

.३.

# प्रेमलताम्बा*

१३-३-९९ तारिकायां 'ज्ञानप्रवाह'-सभायां **ने०च० कृष्णमाचार्येण** सद्यो विरच्य पठिताः श्लोकाः—

यशःकायेन सञ्जाता वर्धमाना स्मृतीरणैः।
पूता प्रेमलतामाता कुर्यात् संसदि सन्निधिम्॥

नश्वरीं तनुमुत्सृज्य धृत्वा नादमयीं तनुम्।
विराजमानायै प्रेमलताम्बायै नमो नमः॥

मामाहूतवती प्रभाषितुमिह श्रीप्रेमवल्ली सती,
तस्मात् तां मनसा स्मरामि विदुषीं नो चेत् कृतं हन्यते।
ये चाप्यत्र समागतास्सुमिलिता गोष्ठ्यां सभायामपि,
विद्वांसो मम वन्दनं विरचितं गृह्णन्तु शृण्वन्तु च॥

क्वासौ वरुणासी बुधप्रवरभूः क्वाहं वराकाग्रणीः,
आहूतस्समुपागतोऽत्र भवतामग्रे मनाग् भाषितुम्।
सम्मानं समुपेत्य यद्यहमितो गच्छामि धन्योऽस्म्यहम्,
प्रत्याख्यानमुपेत्य यद्यहमितो लाभो न कोऽप्यस्ति वः॥

ज्ञानप्रवाहे त्वभिषिच्यमानः
विद्वत्समालोकनचन्दनाप्तः।
मनोलगं पङ्कमपोह्य सम्यक्
शुद्धिं गतोऽहं विसृजामि दाहम्॥

★★★

* आन्ध्र की **'हरिकथाकालक्षेपम्'** विद्या (शुद्ध शास्त्रीय सङ्गीतमय-अभिनयुक्त व्याख्यान-पद्धति) की अप्रतिम कलाकार श्रीमती **उमा माहेश्वरी** के गुरु एवं गायन तथा वायलिन वादन के सुप्रतिष्ठित सङ्गीतकोविद् श्रीकृष्णमाचार्युलु जी के द्वारा सद्योरचित श्लोक।

.४.

# प्रियबान्धवी

*—डॉ० रामसिंह तोमर*

पूर्वपल्ली, शान्तिनिकेतन, बोलपुर, प० बंगाल वनखण्डेश्वर विद्यापीठ, धन्सुला, पो० तरेनी, मुरैना, म०प्र० २८,
चिरञ्जीवा ऊर्मिला, दिनांक ४/८/९९

**प्रेमलता** और **कणिका*** अपनी तपस्या समाप्त करके ब्रह्मलीन हो गईं। कणिका ने ही अपनी प्रिय सखी प्रेमलताजी से मेरा परिचय कराया। वे मेरी बहिन के रूप में ही सब की परिचित हो गईं। मैं उनके अगाध पाण्डित्य, व्यवहार-कुशलता और सहज भोलेपन से उन्हें श्रद्धा करने लगा। B.H.U. के उनके घर में असंख्य बार ठहरा। वे अधिकतर खादी पहनती थीं, भोजन स्वयं बनाती थीं, गोभक्त थीं, उस घर में उन्होंने अठारह वर्ष तक गोपालन आदर्श रीति से किया। अपनी सन्तान जैसा व्यवहार एवं सम्बन्ध उन गायों से रखती थीं, घर में गोबर-गैस-संयंत्र भी लगा रखा था। हरियाणा एवं साहिवाल जाति की दो गायों को उनके बचपन से पाला फिर इनकी सन्तानों को भी पाला, चार-पाँच गायें और उनके बच्चों से घर समृद्ध रहता था। उनका दूध-मठा-आदि गोरस तथा उसके व्यञ्जनों का प्रसाद बहिनजी के कार्य विभाग के सदस्यों-छात्रों, अन्य मित्र परिवारों को ही नहीं आस-पास काम करने वाले मज़दूरों-सब्जी बेचने वालों तक को मिलता रहता था। वे गोवंश भी अद्भुत संस्कारशील और मानवीय संवेदनाओं से भरे थे।

विख्यात सङ्गीताचार्य पं० ओङ्कारनाथ ठाकुर की पट्टशिष्या थीं बहिन प्रेमलताजी। महामहोपाध्याय सिद्ध योगी मनीषी पं० **गोपीनाथजी कविराज, माता आनन्दमयी,** प्रज्ञाचक्षु वेदवित् महात्मा **स्वामी गङ्गेश्वरानन्दजी** (जिन्होंने वेदत्रयी का भाष्यादि सहित प्रकाशन कराया) इस युग में वेदद्रष्टा **ब्रह्मर्षि दैवरात** (गोकर्ण, कर्णाटक), वेद-तन्त्र-गणित-रसायनशास्त्र-साहित्य-काव्यरचना तथा देशभक्ति के अप्रतिम सङ्गम **स्वामी प्रत्यगात्मानन्द सरस्वती** एवं अन्य भी अनेकों महात्म विभूतियों से उनका घनिष्ठ सम्बन्ध रहा। प्रेमलता-बहिन के माध्यम से मुझे भी इनमें से अधिकांश महापुरुषों के सान्निध्य का सौभाग्य मिला।

प्रेमलताबहिन के साधुचरित पिताश्री-माताजी के प्रति मेरा श्रद्धाभाव था। पिताजी अंग्रेजी के धुरन्धर थे ही, फ़ारसी-उर्दू के भी अच्छे ज्ञाता थे, पंजाबी थे, हिन्दी-व्रजभाषा तथा बंगाली भलीभाँति जानते थे। बहिन की प्रेरणा से मैं ने लन्दन के ब्रिटिश म्यूज़ियम से 'सहसरस' की माइक्रोफिल्म मँगाई थी, मैं फारसी लिपि अच्छी तरह नहीं जानता अत: काम आगे नहीं बढ़ाया। प्रेमलताजी ने पिताजी की सहायता लेकर सहसरस का देवनागरी में लिप्यन्तरण करके उसे भलीभाँति सम्पादित किया और (सङ्गीत

* पू० बहिनजी की बहुत प्यारी (आयु में ७-८ वर्ष छोटी) सखी (श्रीमती-तोमर)। इन्हीं के नाते हिन्दीजगत् के सुप्रख्यात धुरन्धर विद्वान् एवं प्रकृति से नितान्त सन्तसेवी निगूढ़ भक्त प्रो० **श्रीरामसिंह तोमर** जी से घनिष्ठ सम्पर्क हुआ, हेमारे अत्यन्त हितैषी वरिष्ठ बन्धु की भाँति रहे; उनके पत्रों में ''प्रिय बान्धवी'' एवं कणिकाजी का लाड़भरा ''सखी'' सम्बोधन आजीवन बना रहा। मेरे लिये तो वे स्निग्ध अभिभावक-वत् रहे; १९९९ मई में श्र० कणिकाजी एवं २००१ मई में ही श्र० तोमरजी भी प्रभुधाम में जा मिले। पू० बहिनजी के संस्मरण रूप में यह पत्र ९९ में ही वे मुझे भेज चुके थे। २००१ मार्च तक उनसे पत्राशीष मुझे मिलते रहे। —ऊर्मिला

एवं साहित्य दोनों शास्त्रों में प्रवीण होने से) विद्वत्तापूर्ण भूमिका लिखकर उसे प्रकाशित कराया। ग्वालियर के पं० हरिहरनिवास द्विवेदी ने उनके इस कार्य की बड़ी प्रशंसा की और उन्हें ग्वालियर अपने घर आमन्त्रित किया। फिर तो आजीवन उनसे स्नेह-आदर-पूर्ण घनिष्ठ सम्पर्क बना रहा।

इससे पहले बहिन ने महाराणा-कुम्भा द्वारा रचित बृहत्काय 'सङ्गीतराजः' नामक सङ्गीतशास्त्रीय ग्रन्थ का सम्पादन किया, जिस पर मेवाड़ के महाराणा (श्री भगवत्-सिंहजी) द्वारा उन्हें विशेष सम्मानित किया गया था, चित्तौड़गढ़-दुर्ग में स्थित (महाराणा-कुम्भा द्वारा बनवाये गये) कीर्तिस्तम्भ या विजयस्तम्भ की चाँदी में प्रतिकृति बनवा कर पुरस्कार स्वरूप प्रेमलताजी को भेंट की गई थी।

काशीहिन्दूविश्वविद्यालय में सङ्गीतशास्त्रविभाग की प्रतिष्ठा उनकी सूझबूझ का ही परिणाम है। इस विभाग से विभिन्न स्तरों से निकले एवं सम्बद्ध रहे विद्यार्थी विश्वभर में प्रतिष्ठित हुए एवं इस विभाग में **बहिनजी द्वारा चलाई जाती हुई बहु-आयामी शोधपूर्ण प्रवृत्तियों से देश-विदेश में काशीहिन्दू-विश्वविद्यालय का सुनाम हुआ। यहाँ रहते हुए सबके हित के लिये ही कार्य करने में भी उन्हें अनावश्यक बहुत परिश्रम करना और बहुत-कुछ असह्य सहना भी पड़ा। क्योंकि जो लोग स्वयं निःस्वार्थ सत्कार्य कर नहीं पाते वे अन्य किसी के द्वारा किये जाते अच्छे कार्यों को सह भी नहीं पाते—इसीलिये प्रायः विश्वविद्यालय के विभाग व्यर्थ-राजनीति के दुर्ग बने रहते हैं, ईर्ष्या-द्वेष से पीड़ित हैं। प्रेमलताजी ने इस अग्नि-परीक्षा में से गुज़रते हुए विविध विद्याविषयक बहु-आयामी कार्यकलाप चालू करने एवं बनाये रखने में अपूर्व धैर्य का परिचय दिया।**

**अपने इस गुण का, विद्वता का और प्रशासन-विषयक दक्षता का परिचय उन्होंने मध्यप्रदेश के इन्दिरा-कला-सङ्गीत-विश्वविद्यालय के—वाइसचांसलर के रूप में भी भलीभाँति दिया।** उस संस्था की आवश्यकताओं को लेकर वे विश्वविद्यालय-अनुदान आयोग के पास गईं, राज्यपाल आदि से भी समय-समय पर बात करती रहीं और समुचित अनुदान-राशियाँ संस्था के लिये प्राप्त करवाईं। अपने सेवाकाल में उस संस्था का बहुत हितसाधन किया। किन्तु फिर सङ्गीत-कला-जगत् की और वहाँ की स्थानीय राजनीति के कारण ही वह विश्वविद्यालय पनप नहीं सका।

**भारत की सङ्गीत ही नहीं, नाटक से सम्बन्धित क्षेत्र की भी विशिष्ट हस्तियों तथा संस्थाओं से उनका गहरा सम्बन्ध रहा। वे संगीत-नाटक-अकादमी (केन्द्रिय) की कार्यकारिणी की महत्त्वपूर्ण सदस्या, समर्थ समायोजिका फिर रत्नसदस्या, उपाध्यक्षा आदि रहीं। का०हि०वि० के अपने कार्यकाल में उन्होंने 'अभिनयभारती' नाम से एक उत्साहभरा संस्था-परिवार गठित किया जिसमें विश्वविद्यालय के—महिला महावि०, प्राच्य धर्मविज्ञान संकाय, कलासंकाय के अनेक विभाग (संस्कृत, दर्शन, संस्कृति, हिन्दी, कला-इतिहास आदि) विज्ञान-संकायों के भी कुछ व्यक्ति, वाराणसेय संस्कृतविश्वविद्यालय, कमच्छा और राजघाट के हिन्दू-विद्यालय महाविद्यालयों के अध्यापक एवं छात्र-छात्रायें तथा वाराणसी के परिनिष्ठित रङ्गकर्मी एवं कला-पोषक विशिष्ट व्यक्ति—इत्यादि बहुत व्यापकक्षेत्र के व्यक्ति बहिनजी का अपना परिवार ही बन गये थे। इन सबके सम्मिलित उपक्रम से अभिनय भारती के किसी न किसी नाट्य-प्रयोग का मञ्चन वे उज्जैन के वार्षिक कालिदाससमारोहों में तथा लखनऊ, वाराणसी, विश्वसंस्कृतसम्मेलन आदि में कराती थीं।**

विश्वभारती (शान्तिनिकेतन) ने भी उन्हें अनेक बार आमन्त्रित किया था। एक बार उन्होंने बहुत ही सारगर्भित तीन व्याख्यान दिये थे—**'राग और छन्द का सम्बन्ध'**—विषय पर। यहाँ जब भी आईं तब अपनी सखी कणिका के साथ ही रहतीं-ठहरतीं थीं। हमारे घर की सदस्या ही थीं वे। हमारे सुख-दुःख में हमेशा साथ रहीं। हमारी बेटी के विवाह में आईं तो भी अनेक असुविधायें रहते हुए भी वे घर पर ही रहीं।

का०हि०विश्वविद्यालय से सेवानिवृत्ति के बाद परिसर के घर को छोड़ा तो उन्होंने करौंदी (का०हि०वि० की दीवाल के बाहर बनी कॉलोनी) में एक बहुत अच्छा घर खरीद लिया अपनी सब जमा पूँजी व्यय करके, क्योंकि उन्हें अपना समृद्ध ग्रन्थ-

संग्रह सुरक्षित रखना था एवं सदा की भाँति अतिथियों के सुखद निवासादि सेवा का क्रम बनाये रखना था। इस घर का सार्थक नाम रखा गया—**'आम्नाय'**, यहाँ विद्या का ही सतत प्रवाह जो बना रहना था। आम्नाय में भी हमलोग सपरिवार कई दिन बड़े आराम से ठहरे। घर की सब देखभाल और व्यवस्था वे स्वयं करती थीं। हम पाँच सदस्य थे। उन्होंने सेवकों का, पानी-बिजली का, यातायात का, भोजनादि का किसी प्रकार का कष्ट हमें नहीं होने दिया। उनकी व्यवस्था इतनी पक्की थी कि वाराणसी स्टेशन पर उतरते ही उनका सहेजा हुआ वाहन और चालक हमारी अगवानी तथा घर ले जाने के लिये तत्पर उपस्थित था।

देश-विदेश के अनेकों जिज्ञासुओं, छात्र-छात्राओं से वे घिरी रहती थीं; **विद्यादान के बदले किसी से कुछ भी नहीं लेती थीं, केवल 'पेंशन' ही निर्वाह-साधन था,** फिर भी खुले दिल से सब को यथावसर खिलाना-पिलाना और पढ़ाना चलता रहता था। उस समय एक विदेशी युवती उनसे संगीत सीखती थी। गुरु-शिष्या ने युगल स्वर से हमें कबीर के कई भजन सुनाए, संस्कृत के स्तोत्र भी।

**इन्दिरागांधी-राष्ट्रीय कला केन्द्र की सञ्चालिका-प्रवर्त्तिका** डॉ० (श्रीमती) **कपिला वात्स्यायन** से उनका बहुत अच्छा परिचय एवं सम्बन्ध था। संस्था के अनेक कार्यों की मूलभूत गोष्ठियों में वे परामर्श के लिये आमन्त्रित रहती थीं, कलातत्त्वकोश के लिये प्रस्तावित बहुशास्त्रीय समान शब्दों के चयन में भी वे साथ रही थीं। संस्था की अनेक शोधयोजनाओं तथा अनुवाद-सम्पादनादि प्रकल्पों का भार उन्हें सौंपा गया था, जिन्हें प्रेमलताजी ने जीवन के अन्तिम दिन तक सुचारु रूप से बहुत कुछ सम्पन्न किया। **कलातत्त्वकोश-शृङ्खला इस संस्था की एक श्रेष्ठ कृति है। कलामूल-शास्त्र के अन्तर्गत भी बहिनजी ने अमूल्य सम्पादन** प्रकाशन किये।

**श्री सच्चिदानन्द हीरानन्द वात्स्यायन 'अज्ञेय'** जी की मेरे ऊपर बड़ी कृपा थी। सन् १९४८ के आसपास वे नेहरू-अभिनन्दन-ग्रन्थ का सम्पादन कर रहे थे, उस समय कुछ लेखों के अनुवाद के प्रसङ्ग में उन्होंने मेरा सहयोग लिया और उनकी कार्य शैली से मेरा परिचय हुआ। महान् व्यक्तित्व था उनका; बड़े ही शिष्ट और सुरुचि-सम्पन्न थे। मैं उनके निवास ('वसुधा', नया कटरा) पर जाता, स्वयं चाय बना कर पिलाते। वे बहुत कम बोलते थे, मैं और भी कम। कभी-कभी हमारा काम बिना बात किए ही सम्पन्न हो जाता। वे भी कभी-कभी मेरे यहाँ 'एलेन-गंज' आते, अपना लेख देकर लौट जाते, बात करने की जरूरत ही नहीं पड़ती। टगोर टाउन, इलाहाबाद में "कपिला-वात्स्यायन" विवाह का निमन्त्रण उन्होंने स्वयं कृपा करके मेरे पास भेजा था और उस शुभ अवसर पर मैं उपस्थित रहा था। दोनों की जोड़ी अपूर्व थी। प्रेमलता जी के साथ कपिलाजी की वैचारिक घनिष्ठता और फिर 'अज्ञेय' जी से भी स्नेहादर-सम्पर्क के स्मरण के कारण ही उनकी वे सब यादें ताजी हो आईं। प्रेमलताजी ने अज्ञेय जी द्वारा आयोजित 'वत्सलनिधि' हीरानन्द शास्त्री-स्मारक-व्याख्यानमाला में 'रस' विषयक चार व्याख्यान दिये थे, जिन्हें अज्ञेय जी ने बहुत भाव-सहित सुना था और उसी के कुछ ही महीनों बाद वे हमारे बीच नहीं रहे।

लिख रहा हूँ प्रेमलताजी के संस्मरण, इसी में उठ आ रही हैं और अनेक यादें। इस युग के अद्वितीय संगीताचार्य एवं सङ्गीत को समाज में सम्मान्य स्थान दिलाने में अग्रणी पं० विष्णु-दिगम्बर पलुस्कर के प्रमुख शिष्य थे पं० ओंकारनाथ ठाकुर (बहिनजी के गुरु), नारायण राव व्यास; वी० एन० ठकार। ये सभी बड़े-बड़े सङ्गीत सम्मेलनों में गाते थे। पं० ओंकारनाथ जी अपने मधुर कण्ठ और रचनाओं से श्रोताओं को मन्त्रमुग्ध कर देते थे। यू०जी०सी० की अध्यक्षा स्व० माधुरी शाह ने पं० ओंकारनाथ जी के विषय में अपने बचपन का एक संस्मरण सुनाया था— ये छोटी बालिका थीं तब एक बार पं० जी इनके घर ठहरे थे; रात में अभ्यास में गा रहे थे—"चलो माई जमुना के तीर!" ....एक घण्टे से ऊपर हो गया तो बालिका ने पूछा "पण्डित जी! जमुना के तीर पहुँचने में और कितनी देर लगेगी?" उत्तर मिला "एक घण्टा और लगेगा।" बालिका जाकर सो गई; सुबह उठकर प्रगति पूछी तो पाया कि अभी तक पहुँच नहीं पाये।

**प्रेमलताजी ने अपने गुरुजी को सच्ची गुरुदक्षिणा दी कि उनके रचना-कौशल, भावानुरूप राग-ताल-योजना आदि से समृद्ध सम्पूर्ण सङ्गीत तो अपनाया ही पर सबसे अधिक अपने संस्कृतज्ञान का उपयोग सङ्गीतशास्त्र के साथ जोड़कर**

**पण्डितजी के ग्रन्थों को लिखने में पूरा-पूरा सहयोग दिया और भारतीय सङ्गीत को पूरे विश्व के सामने लाईं।**

शास्त्र की उन्हें गहरी लगन थी। इसी नाते वे **आचार्य कैलासचन्द्र '*बृहस्पति*'** के सम्पर्क में भी आईं जो आकाशवाणी भवन में 'व्रजभाषा विभाग' में थे। सहृदय व्यक्ति थे, संगीतशास्त्र और प्रयोग दोनों के ज्ञाता और अच्छे शिक्षक भी थे।

प्रेमलताजी ने उनसे भी सीखने योग्य बहुत कुछ ग्रहण किया, और अपनी साधना में खोई रहीं।

समग्र जीवन-साधना के पथ पर वे निरन्तर अग्रसर होती रहीं और फिर वहीं चली गईं जहाँ प्रत्येक को अपना-अपना कार्य करके जाना ही है। वह सहृदय मूर्ति प्रत्यक्ष हमारे सामने न रही, पर उनकी यशः काया को जरा-मरण का कोई भय नहीं है।

*—रामसिंह तोमर*

★★★

